Kashmir Series of Texts and Studies

No. LIX

THE

# TANTRALOKA

OF

## ABHINAVA-GUPTA

WITH COMMENTARY

BY

## RĀJĀNAKA JAYARATHA

EDITED

BY

PANDIT MADHUSŪDAN KAUL SHĀSTRĪ, M. A., M. O. L.

VIDYĀVĀRIDHI,

Superintendent Research Department,
His Highness' Government
JAMMU & KASHMIR,
SHRINAGAR.

Published under the Authority of the Government of

HIS HIGHNESS RĀJRĀJEŚVARA MAHĀRĀJĀDHIRĀJA

S'rī MAHĀRĀJA HARISINGHJI BAHĀDUR,
G. C. I. E., K. C. V. O.

MAHARAJA OF JAMMU AND KASHMIR

Volume IX




BOMBAY:
PRINTED AT THE "TATVA-VIVECHAKA" PRESS.
1938 A. D.

श्रीसोमानन्दनाथप्रभृतिगुरुवरादिष्टसन्नीतिमार्गो
लब्ध्वा यत्रैव सम्यक्पटिमनि घटनामीश्वराद्वैतवादः ।
कश्मीरेभ्यः प्रसृत्य प्रकटपरिमलो रञ्जयन्सर्वदेशान्
देशेऽन्यस्मिन्नदृष्टो घुसृणविसरवत्सर्ववन्द्यत्वमाप ॥ १ ॥

तरत तरसा संसाराब्धिं विधत्त परे पदे
पदमविचलं नित्यालोकप्रमोदसुनिर्भरे ।
विमृशत शिवादिष्टाद्वैतावबोधसुधारसं
प्रसभविलसत्सद्युक्त्यान्तःसमुत्प्लवदायिनम् ॥ २ ॥

ॐ

काश्मीर-संस्कृतग्रन्थावलिः ।

ग्रन्थाङ्कः ५९

# श्रीतन्त्रालोकः ।

श्रीमन्महामाहेश्वराचार्यवर्य-श्रीमदभिनवगुप्तविरचितः ।

श्रीमन्महामाहेश्वराचार्य-श्रीजयरथकृतविवेकाख्यटीकोपेतः ।



श्रीराजराजेश्वर-महाराजाधिराज-कश्मीरनरेन्द्र-श्रीहरिसिंहजी-
बहादुराज्ञया

रिसर्च-कार्यालयाध्यक्ष-पण्डित-मधुसूदनकौल-शास्त्रिणा

उद्दिष्टकार्यालयस्थेतरपण्डितसहायेन

संशोधनादिसंस्करणोत्तरं

संपाद्य

मुम्बय्यां 'तत्त्वविवेचक' मुद्रणालये मुद्रापयित्वा प्राकाश्यमुपनीतः ।

नवमो भागः ( पंचदशमाह्निकम् )




संवत् १९९४. काश्मीर-श्रीनगर

अथ

# श्रीतन्त्रालोके

श्रीमन्महामाहेश्वराचार्याभिनवगुप्तविरचिते
श्रीजयरथकृतविवेकाख्यटीकोपेते

## पञ्चदशमाह्निकम् ।

यः परमेशसपर्या-
क्रियोपदेशाङ्कुशेन भवकरिणम् ।
कृतवाननतिबलमतिबल-
मस्मि नतः फणभृदाभरणम् ॥

इदानीं नित्यकर्माद्यात्मकं यजनं निरूपयितुं द्वितीयार्धेन प्रतिजानीते

अथैतदुपयोगाय
यागस्तावन्निरूप्यते ।

एतदुपयोगायेति एतस्य प्रक्रान्तस्य दीक्षोपक्रमस्य उपयोगाय तत्संपत्त्यर्थमित्यर्थः । दीक्षायां हि नित्याद्यात्म यजनमुपक्रमोपयोगित्वादङ्गमेतदानन्तर्येण तत्संपत्तेः । यथोक्तं

'नित्याह्निके समाप्ते तु कुर्यान्नैमित्तिकं बुधः ।'

इति ॥

ननु दीक्षैव नाम किंप्रयोजना यदुपक्रमोपयोगायापि अङ्गतया यजनमुच्यतेत्याशङ्क्याह

तत्र दीक्षैव भोगे च
मुक्तौ चायात्युपायताम् ॥ १ ॥
स्वयं संस्कारयोगाद्वा
तदङ्गं तत्प्रदर्श्यते ।

स्वयमिति साक्षादनन्यापेक्षत्वेनेत्यर्थः । संस्कारयोगादिति ज्ञानाद्यधिकृतत्वापादनात्मनः। तत्र दीक्षा लोकधर्मिणः साधकस्य भोगे, निर्बीजस्य च पुत्रकस्य मोक्षे स्वयमुपायः, शिवधर्मिणश्च भोगे, सबीजकस्य च पुत्रकस्य मोक्षे संस्कारयोगादुपायः । अनयोर्हि दीक्षया संस्कारे कृते योगज्ञानादावधिकारो जायते येन भुक्तिमुक्ती स्याताम् । तदिति एवं भुक्तिमुक्त्युपायत्वाद्धेतोः ॥

एतदेव ससंवादं दर्शयति

यो यत्राभिलषेद्भोगान्
स तत्रैव नियोजितः ॥ २ ॥

सिद्धिभाङ्मन्त्रशक्त्येति
श्रीमत्स्वायंभुवे विभुः ।
योग्यतावशतो यत्र
वासना यस्य तत्र सः ॥ ३ ॥
योज्यो न च्यवते तस्मा-
दिति श्रीमालिनीमते ।
वदन्भोगाद्युपायत्वं
दीक्षायाः प्राह नो गुरुः ॥ ४ ॥

श्रीमत्सूक्ष्मस्वायम्भुवादाविति गुरुर्वदन् दीक्षाया भोगाद्युपायत्वं नः प्राहेति समन्वयः । श्रीमालिनीमते इति प्रक्रान्ते । यदुक्तं तत्र

'योग्यतावशसंजाता यस्य यत्रैव वासना ।
स तत्रैव नियोक्तव्यो दीक्षाकाले विचक्षणैः ॥
यो यत्र योजितस्तत्त्वे स तस्मान्न निवर्तते ।' (१२।४१)

इति ॥ ४ ॥

एवं भोगे दीक्षायाः स्वयमुपायतामभिधाय मोक्षेऽप्याह

न चाधिकारिता दीक्षां
विना योगेऽस्ति शाङ्करे ।

न च योगाधिकारित्व-
मेकमेवानया भवेत् ॥ ५ ॥
अपि मन्त्राधिकारित्वं
मुक्तिश्च शिवदीक्षया ।
इत्यस्मिंन्मालिनीवाक्ये
साक्षान्मोक्षाभ्युपायता ॥ ६ ॥
दीक्षायाः कथिता प्राच्य-
ग्रन्थेन पुनरुच्यते ।
पारम्पर्येण संस्कृत्या
मोक्षभोगाभ्युपायता ॥ ७ ॥

नन्वत्र 'मुक्तिश्च शिवदीक्षया' इत्युत्तरेणैव ग्रन्थेन दीक्षायाः साक्षान्मोक्षोपायत्वमुक्तं, प्राच्येन पुनर्योगादावधिकारित्वमिति कथमिह एतदविशेषेणैव उक्तमित्याशङ्क्य आह प्राच्येत्यादि। पारम्पर्येणेति दीक्षया हि संस्कारः, ततो योगादावधिकारस्ततो योगसिद्ध्या मुक्तिर्मन्त्रसिद्ध्या च भुक्तिरित्युक्तं मोक्षभोगाभ्युपायतेति। तेन केषांचन संस्कारद्वारेण दीक्षा मुक्तौ भुक्तौ च हेतुरित्युक्तं स्यात् ॥ ७ ॥

न केवलमेतदत्रैवोक्तं, यावच्छास्त्रान्तरेष्वपि इत्याह

येषामध्यवसायोऽस्ति
  न विद्यां प्रत्यशक्तितः ।
सुखोपायमिदं तेषां
  विधानमुदितं गुरोः ॥८॥
इति श्रीमन्मतङ्गाख्ये
  ह्युक्ता मोक्षाभ्युपायता ।

येषामज्ञत्वेन असामर्थ्यात् सम्यग्ज्ञानस्वभावां विद्यां प्रति मोक्षोपायतायामध्यवसायो निश्चयो नास्ति तेषामिदं गुरुकर्तृकं क्रियाप्रधानं विधानं सुखोपायमुदितम्, एवमनायासमेवैषां मोक्षः स्यादिति । एतच्छ्रीमन्मतङ्गशास्त्रादावपि उक्तम् ॥

ननु इह पुंसां ज्ञानक्रियावरणकारिद्रव्यात्ममलकार्यमज्ञानं, तच्च कारणभूते तस्मिन्ननिवर्तिते न निवर्तते पटलाद्यनिवृत्तावन्धानामिव आन्ध्यम् । तद्विनिवर्तने च क्रियैव शक्ता, न ज्ञानं

तस्य द्रव्यविनिवर्तने सामर्थ्यादृष्टेः । नहि चक्षुषोर्वैद्यव्यापारमन्तरेण पटलोऽयमिति ज्ञानादेव तद्विनिवृत्तिः स्यात् । तस्मात् क्रियैव आवरणापगमे साक्षादुपायो न ज्ञानमित्येतत्कथमुक्तमित्याशङ्क्य आह

सम्यग्ज्ञानस्वभावा हि
विद्या साक्षाद्विमोचिका ॥९॥

इह मलो नाम न किञ्चन द्रव्यम्, अपितु अज्ञानं, तच्च ज्ञानोदयादेव निवर्तत इत्युपपादितं प्राक् बहुशः । तत् स्वविरुद्धमज्ञानं विनिवर्तयत् सम्यग्ज्ञानमेव पुंसां साक्षान्मोक्षहेतुरिति युक्तमुक्तं साक्षान्मोचिकां विद्यां प्रति अकुशलानां क्रिया सुखमुपाय इति ॥ ९ ॥

नच एतदस्माभिः स्वोपज्ञमेव व्याख्यातमित्याह

उक्तं तत्रैव तत्त्वानां
कार्यकारणभावतः ।
हेयादेयत्वकथने
विद्यापाद इति स्फुटम् ॥१०॥

तत्र श्रीमन्मतङ्गशास्त्रे एव विद्यापादे तत्त्वानां कार्यकारणभावमवलम्ब्य हेयोपादेयत्वाभिधानप्रस्तावे

'न प्रक्रियापरं ज्ञान..............।' (स्व० ११।१९९)

इत्याद्युक्तन्यायेन इति एतत् सर्वं स्फुटं सन्देहविपर्यासरहितत्वादपरिम्लानमुक्तं, किं ग्रन्थविस्तरेण, तत एव अवधार्यमित्यर्थः । यदुक्तं तत्र

'विवेको यत्र तत्त्वानां कार्यकारणभेदतः ।
यथावदुदितं वस्तु हेयं चैवोपवर्ण्यते ॥
विद्यापादः स विज्ञेयः........................।' (२।९)

इति उद्दिश्य

'पाश्यः पाशयिता पाशास्त्रयमेतद्व्यवस्थितम् ।
साध्यसाधनभावोक्त्या यथा तत्प्रकटं भवेत् ॥
तथा सम्यक्प्रवक्तव्यं तावद्विद्यावधार्यताम् ।' (६।३)

इत्यादिप्रश्नोत्तरद्वारेण अनेकप्रकारम् ॥ १० ॥

ननु यद्येवं विद्यैव साक्षान्मोचिका, तत्किं क्रियादिपादत्रयोपात्तेन दीक्षादिनेत्याशङ्क्याह

तत्राशक्तास्तु ये तेषां
दीक्षाचर्यासमाधयः ।

ननु एवं

'सदाशिवपदं योगाच्चर्यातो वाथ दीक्षया ।
प्राप्यते चित्तभेदेन मोक्षो वाथ चतुष्टयम्॥' (मत० २६।६३)

इत्याद्युक्त्या ज्ञानादेश्चतुष्टयादपि अविशेषेणैव मुक्तिः स्यात्, तत्कथं ज्ञानस्य तद्वतो वा गुरोरपि सर्वत्रैव उत्तमत्वमित्याशङ्क्य आह

ते विद्यापूर्वका यस्मा-
त्तस्माज्ज्ञान्युत्तमोत्तमः ॥११॥

विद्यापूर्वका इति ज्ञात्वा हि अनुष्ठानं भवेदिति भावः ॥ ११ ॥

ननु इह समनन्तरोक्तयुक्त्या दीक्षामन्तरेण योगज्ञानादावधिकार एव न भवेदिति ज्ञानं दीक्षापूर्वकमिति वक्तव्यं, प्रत्युत कथमेतदन्यथोक्तमित्याशङ्क्य आह

ज्ञानं च शास्त्रात्तच्चापि
श्राव्यो नादीक्षितो यतः ।
अतोऽस्य संस्क्रियामात्रो-
पयोगो दीक्षया कृतः ॥१२॥

नादीक्षितः श्राव्य इति, संस्क्रियामात्रोपयोग इति च । यदुक्तं

'अदीक्षितानां पुरतो नोच्चरेच्छिवपद्धतिम् ।'

इति,

'समयी संस्कृतो ह्येवं वाचनेऽस्यार्हता भवेत् ।
श्रवणेऽध्ययने होमे पूजनादौ तथैव च ॥
चर्याध्यानविशुद्धात्मा लभते पदमैश्वरम् ।' (स्व० ४।७९)

इति च ॥ १२ ॥

ननु अस्य दीक्षया संस्कारमात्रोपयोग एव भवेदिति कस्मादुक्तं यदयमनया योजनिकाबलात् तत्तत्पदमवाप्यासादयेदित्याशङ्क्य आह

यत्र तत्रास्तु गुरुणा
योजितोऽसौ फलं पुनः ।
स्वविज्ञानोचितं याति
ज्ञानीत्युक्तं पुरा किल ॥१३॥

स्वविज्ञानोचितमिति अकृतशिवतत्त्वयोजनिकोऽपि हि समयी तथा तथा ज्ञानमभ्यस्यंस्तदैकात्म्यं यायादित्याशयः । पुरेति चतुर्थाह्निकादौ ॥ १३ ॥

तीव्रशक्तिपातपवित्रितस्य पुनस्तत्संस्कारोपयोगोऽपि नास्तीत्याह

यस्य त्वीशप्रसादेन
दिव्या काचन योग्यता ।
गुरोः शिशोश्च तौ नैव
प्रति दीक्षोपयोगिता ॥१४॥

ननु एवंविधौ गुरुशिष्यौ प्रति दीक्षाया यद्युपयोगो नास्ति, तत् ज्ञानादावनयोरधिकार एव कथंकारं स्यादित्याशङ्क्य आह

ज्ञानमेव तदा दीक्षा
श्रीत्रैशिकनिरूपणात् ।

ज्ञानमिति अर्थात्सांसिद्धिकम् । यदुक्तं तत्र

'एवं यो वेत्ति तत्त्वेन तस्य निर्वाणगामिनी ।
दीक्षा भवत्यसन्दिग्धा तिलाज्याहुतिवर्जिता ॥' परात्रीं० २५

इत्युपक्रम्य

'स सिद्धिभाग्भवेन्नित्यं स योगी स च दीक्षितः ।'

इति ॥

तद्वानेव च सर्वशास्त्रेषु परमुत्तमोऽधिकारीत्युक्त इत्याह

सर्वशास्त्रार्थवेत्तृत्व-
मकस्माच्चास्य जायते ॥१५॥

इति श्रीमालिनीनीत्या
यः सांसिद्धिकसंविदः ।
स उत्तमाधिकारी स्या-
ज्ज्ञानवान्हि गुरुर्मतः ॥१६॥

सांसिद्धिकसंविद इति स्वतःप्रवृत्तसत्तर्क इत्यर्थः । यदुक्तं प्राक्

'यस्य स्वतोऽयं सत्तर्कः सर्वत्रैवाधिकारवान् ।
अभिषिक्तः स्वसंवित्तिदेवीभिर्दीक्षितश्च सः ॥
स एव सर्वाचार्याणां मध्ये मुख्यः प्रकीर्तितः ।' (४।४३)

इति ॥ १६ ॥

तच्चास्य ज्ञानं सर्वविषयमागमेषूक्तमित्याह

आत्मने वा परेभ्यो वा
हितार्थी चेतयेदिदम् ।
इत्युक्त्या मालिनीशास्त्रे
तत्सर्वं प्रकटीकृतम् ॥ १७ ॥

इत्युक्त्येति । यदुक्तं तत्र

'एतत्सर्वं परिज्ञेयं योगिना हितमिच्छता ।
आत्मनो वा परेषां वा नान्यथा तदवाप्यते ॥'

इति । तदिति सांसिद्धिकं ज्ञानम् । सर्वमिति समस्तविद्यादिपादचतुष्टयविषयमित्यर्थः । यदस्य तावदात्मनि ज्ञानमेवोपयुक्तमित्युक्तप्रायम् । परे पुनर्विचित्रा इति तदाशयभेदमधिकृत्य क्रियादि सर्वमेव अपेक्षते येन अस्य तदनुग्रहः सिद्ध्येत् । यदभिप्रायेणैव

'विद्यापादार्थकुशलः क्रियापादधृतक्रमः ।
योगपादकृताभ्यासश्चर्यापादानुवर्तकः ॥
गुरुर्दीक्षां प्रकुर्वीत........................ ।'

इत्यादि अन्यत्र उक्तम् ॥ १७ ॥

ननु परे विचित्रा इत्यत्र किं प्रमाणमित्याशङ्क्य आह

ज्ञानयोग्यास्तथा केचि-
च्चर्यायोग्यास्तथापरे ।
दीक्षायोग्या योगयोग्या
इति श्रीकैरणे विधौ ॥ १८ ॥

यदुक्तं तत्र

'ये यथा संस्थितास्तार्क्ष्य तथैवेशः प्रसादकृत् ।
केचिच्चात्र क्रियायोग्यास्तेषां मुक्तिस्तथैव सा ॥

ज्ञानयोग्यास्तथा चान्ये चर्यायोग्यास्तथापरे ।
एवं येषां यथा प्रोक्तो मोक्षस्तेनैव तस्य तु ॥'

इति ॥ १८ ॥

एवमिदमियता सिद्धमित्याह

तत्रोक्तलक्षणः कर्म-
योगज्ञानविशारदः ।
उत्तरोत्तरताभूम्यु-
त्कृष्टो गुरुरुदीरितः ॥ १९ ॥

तदुक्तं

'गरीयान्कर्मिणो योगी स च ज्ञानवतः शिशुः ।'

इति ॥ १९ ॥

स एव च परं दीक्षाकर्मण्यधिकृत इत्याह

स च प्रागुक्तशक्त्यन्य-
तमपातपवित्रितम् ।
परीक्ष्य पृष्ट्वा वा शिष्यं
दीक्षाकर्म समाचरेत् ॥ २० ॥

वा विकल्पे । परीक्षया ह्यस्य बुभुक्षुता मुमु-
क्षुता वा साक्षान्न लक्षितेति किमसि बुभुक्षुर्मु-

मुमुक्षुर्वेति तं गुरुः पृच्छेदित्यधिकृत्य दीक्षाकर्म कुर्यात् ॥ २० ॥

इह

'दीक्षा स्वतन्त्रेऽभिहिता ........ ... ।'

इति दृशा श्रीस्वच्छन्दशास्त्र एव प्राधान्येन दीक्षाया लक्षणमुक्तम्, तद्वयमपि सर्वतस्तदर्थोपस्कृतत्वेनैव अत्र तामभिदध्म इति कटाक्षयितुं प्रमुख एव तत् संवादयति

उक्तं स्वच्छन्दशास्त्रे च

शिष्यं पृच्छेद्गुरुः स्वयम्।

फलं प्रार्थयसे यादृ-

क्तादृक्साधनमारभे ॥ २१ ॥

वासनाभेदतः साध्य-

प्राप्तिर्मन्त्रप्रचोदिता ।

यादृगिति भुक्तिरूपं मुक्तिरूपं वा । साधनं दीक्षाविधिम्। वासना शिष्याणां बुभुक्षुर्मुमुक्षुर्वा अस्मीति, गुरोश्च एवंविधामेव दीक्षामस्मै करोमीति चैतसिकोऽनुसन्धानविशेषः । साध्यं भुक्तिर्मुक्तिर्वा ॥

ननु मन्त्रादिभेदादपि तद्भेदोऽस्त्वित्या-
शङ्क्य आह

मन्त्रमुद्राध्वद्रव्याणां
होमे साधारणा स्थितिः ॥२२
वासनाभेदतो भिन्नं
शिष्याणां च गुरोः फलम् ।

नहि मन्त्रादीनां भुक्तौ मुक्तौ वा कश्चिद-
तिशय इत्याशयः ॥

अत एव च शिष्याणां भेद इत्याह

साधको द्विविधः शैव-
धर्मा लोकोज्झितस्थितिः ॥२३
लोकधर्मी फलाकांक्षी
शुभस्थश्चाशुभोज्झितः ।
द्विधा मुमुक्षुर्निर्बीजः
समयादिविवर्जितः ॥ २४ ॥
बालबालिशवृद्धस्त्री-
भोगभुग्व्याधितादिकः ।

अन्यः सबीजो यस्येत्थं
दीक्षोक्ता शिवशासने ॥२५॥
विद्वद्वन्द्वसहानां तु
सबीजा समयात्मिका ।
दीक्षानुग्राहिका पाल्या
विशेषसमयास्तु तैः॥ २६ ॥

तत्र बुभुक्षुः साधकः । स च द्विविधः शिवधर्मी लोकधर्मी च । मुमुक्षुः पुत्रकः । स च द्विविधो निर्बीजः, सबीजश्च । सबीज एव कृताभिषेक आचार्य इति विभागः । समयित्वं पुनरेतत्पदप्राप्तियोग्यतापात्रमिति नासौ पृथगिह उक्तः । यथोक्तं

'.................समयी राजपुत्रवत् ।'

इति । समयादिविवर्जित इति बालादीनां तत्परिपालनासामर्थ्यात् । समयात्मिकेति विद्वदादीनां तत्परिपालने सामर्थ्यात् । अत एव उक्तं तैस्तु विशेषसमयाः पाल्या इति । तदुक्तं तत्र

'साधकां द्विविधस्तत्र शिवधर्म्यैकतः स्थितः ।
शिवमन्त्रविशुद्धाध्वा साध्यमन्त्रनियोजितः ॥

ज्ञानवांश्चाभिषिक्तश्च मन्त्राराधनतत्परः ।
त्रिविधायास्तु सिद्धेर्वै सोऽत्रार्हः शिवसाधकः ॥
द्वितीयो लोकमार्गस्थ इष्टापूर्तविधौ रतः ।
कर्मकृत्फलमाकाङ्क्षञ्शुभैकस्थोऽशुभोज्झितः ॥
तस्य कार्यं सदा मन्त्रैरशुभांशविनाशनम् ।' (४।८६)

इति,

'मुमुक्षुर्द्विविधः प्रोक्तो निर्बीजो बीजवान्पुनः ।
बालबालिशवृद्धस्त्रीभोगभुग्व्याधितात्मनाम् ॥
तेषां निर्बीजिका दीक्षा समयादिविवर्जिता ।
विद्वद्द्वन्द्वसहानां तु सबीजा कीर्तिता प्रिये ॥
दीक्षानुग्राहिका तेषां समयाचारसंयुता ।
विशेषसमयाचारा मन्त्राख्ये ये प्रकीर्तिताः ॥
तेऽत्र पाल्याः प्रयत्नेन मोक्षसिद्धिमभीप्सता ।
सबीजा सा तु विज्ञेया पुत्रकाचार्ययोः स्थिता ॥'
(स्व. ४।९०)

इति च ॥ २६ ॥

ननु एषां दीक्षया किं कार्यं, सा च कस्य कीदृशीत्याशङ्क्य आह

**अभावं भावयेत्सम्य-**
**क्कर्मणां प्राच्यभाविनाम् ।**
**मुमुक्षोर्निरपेक्षस्य**
**प्रारब्धैकं न शोधयेत् ॥२७॥**

साधकस्य तु भूत्यर्थ-
मित्थमेव विशोधयेत् ।
शिवधर्मिण्यसौ दीक्षा
लोकधर्मापहारिणी ॥२८॥
अधर्मरूपिणामेव
न शुभानां तु शोधनम् ।
लोकधर्मिण्यसौ दीक्षा
मन्त्राराधनवर्जिता ॥२९॥

प्राच्यभाविनामिति प्राच्यानि दीक्षायाः प्रागिह जन्मान्तरे च उपार्जितानि, भावीनि दीक्षानन्तरमिह करिष्यमाणानि । निरपेक्षस्येति साधकवद्भोगौन्मुख्याभावात् । फलदानोन्मुखस्य वर्तमानस्य पुनः का गतिरित्याशङ्क्य आह प्रारब्धेकं न शोधयेदिति तस्य भोगेनैव अतिवाहनात् । तदुक्तं

'.........................येनेदं तद्धि भोगतः ।'

इति । साधकस्य च इत्थमेव कर्मशोधनं, किंतु तत् भूत्यर्थं, तस्य हि भोगौन्मुख्यात् तद्वासनाधिवासितमेव चेतः,अत एव अत्र अनेन वासना-

भेदात्फलभेद इति प्रतिज्ञातोऽपि अर्थो निर्वाहितः। यदुक्तं

'साधकस्य तु भूत्यर्थं प्राक्कर्मैत्थं तु शोधयेत्।
प्राक्कर्मागामि चैकस्थं भावयित्वा तु दीक्षयेत्॥' (४।१४२)

इति। अत्र च उद्योतकृता यत् इत्थमिति अपास्य एकमिति पठित्वा देहारम्भिशुभाशुभकर्ममध्यादेकमशुभमपि अस्य शोधयेदिति व्याख्यातं, तदुपेक्ष्यमारब्धकार्यदेहारम्भिकर्मोच्छेदाशक्यत्वस्य प्रागुपपादितत्वात् क्वचिदप्येवमनाम्नातत्वाच्च। अत एव श्रीमृगेन्द्रायामपि

'एवमेव क्रियायोगाद्भौतिक्यपि परापरा।
किंतु देहावियोगार्थं प्रारब्धं कर्म देहिनः॥
शैवसाधनसाध्येन संधाय परिपालयेत्।
सानुबन्धं दहेदन्यत्......................॥'

इत्यादि उक्तं ग्रन्थकृता। औचित्याच्च अत्र अस्माभिरयं पाठो रक्षितः। तेन इत्थमिति वक्ष्यमाणप्रकारेण, स च द्वितीयार्धोक्त इति। लोकधर्मापहारिणीति मन्त्राराधनादिपरत्वात्। अधर्मरूपिणामिति प्राक्तनानामागामिनां च, नतु देहारम्भिणां 'प्रारब्धेकं न शोधयेत्' इत्यस्य सर्वविषयत्वात्। तदुक्तं

'प्राक्तनागामिकस्यापि अधर्मक्षयकारिणी ।'

इति । सद्योनिर्वाणदायां च यद्यपि देहारंभिणामपि कर्मणां शोधकत्वं वक्ष्यते, तथापि आसन्नमरणस्यैव इयं कार्येति तेषामारब्धकार्याणामत्र न शोधनम्, अपितु कृतकार्याणां क्षीणप्रायाणामिति तत्रापि एतत् न निर्विषयतां यायात् ॥ २९ ॥

एवमतोऽस्य किं स्यादित्याशङ्क्य आह

प्रारब्धदेहभेदे तु
भुङ्क्तेऽसावणिमादिकम् ।
भुक्त्वोर्ध्वं याति यत्रैष
युक्तोऽथ सकलेऽकले ॥ ३० ॥

इह असौ यत्र क्वचन

'यो यत्राभिलषेद्भोगान्..................।'

इत्याद्युक्तनीत्या सकले यथाभिमते भुवनेश्वरादौ, अथच शुभकर्मभोगान्ते मुमुक्षुरकले शिवे योजितस्तदेव पदं गच्छेत् । यदुक्तं

'लोकधर्मिणमारोप्य मते भुवनभर्तरि ।
तद्धर्मापादनं कुर्याच्छिवे वा मुक्तिकाङ्क्षिणम् ॥'

इति ॥ ३० ॥

एवं भोगदीक्षां निर्णीय, मोक्षदीक्षामपि निर्णयति

समयाचारपाशं तु
　　निर्बीजायां विशोधयेत् ।
दीक्षामात्रेण मुक्तिः स्या-
　　द्भक्त्या देवे गुरौ सदा ॥३१॥
सद्योनिर्वाणदा सेयं
　　निर्बीजा येति भण्यते ।
अतीतानागतारब्ध-
　　पाशत्रयवियोजिका ॥३२॥

दीक्षामात्रेणेति नतु नित्याद्यनुष्ठानेन तत्र बालादेरसामर्थ्यादत एव प्राक् समयादिविवर्जित इत्युक्तम् । अस्यां परं देवगुरुभक्तिमात्रमेव आवश्यकसमय इति उक्तं भक्त्या देवे गुराविति । सेयं निर्बीजदीक्षा न केवलं सद्योनिर्वाणदा यावदतीतानागतारब्धपाशत्रयवियोजिका सती सद्योनिर्वाणदेति च भण्यते इति संबन्धः॥

उभयरूपयापि अनया किं भवेदित्याशङ्क्य आह

दीक्षावसाने शुद्धस्य
देहत्यागे परं पदम् ।

शुद्धस्येति किंचित्कालमवस्थितस्य सतो न वा ॥

सबीजायां पुनर्देहत्यागेऽपि अयं विशेष इत्याशङ्क्य आह

देहत्यागे सबीजायां
कर्माभावाद्विपद्यते ॥३३॥
समयाचारपाशं तु
दीक्षितः पालयेत्सदा ।

इह समयपरिपालनात्मिकायां सबीजायां दीक्षायां देहत्यागेऽपि समयपरिपालनाख्यं यत् कर्म, तस्य अभावादननुष्ठानाद्विपद्यते कंचित्कालम्

'आज्ञाविलङ्घनाद्देवि क्रव्यादत्वं शतं समाः ।'

इत्यादिनीत्या शिवमय्याः स्वसत्तातो भ्रंशित्वा क्रव्यादत्वमियात् । तत् सबीजदीक्षया दीक्षितो निर्बीजदीक्षावदशोधितं समयाचारपाशं पाल-

येत् तदनुष्ठानपर एव भवेत् यथा अयं सदैव शिवसत्तापत्त्यनुप्राणितः स्यात् ॥

एवं श्रीस्वच्छन्दशास्त्रप्रक्रियया दीक्षाया दीक्ष्यस्य च तत्त्वमभिधाय, प्रक्रान्तं दीक्षाकर्मसमाचारमेव प्रस्तौति

एवं पृष्ट्वा परिज्ञाय
विचार्य च गुरुः स्वयम् ॥ ३४॥
उचितां संविधित्सुस्तां
वासनां तादृशीं श्रयेत् ।

तदेवं गुरुः स्वयमेव शिष्यं पृष्ट्वा किं बुभुक्षुर्मुमुक्षुर्वासीति, तदुक्तं बुभुक्षुत्वं मुमुक्षुत्वं परिज्ञाय तदेव च तीव्रमन्दादिरूपतया विचार्य तामुचितां बुभुक्ष्वादिरूपां योग्यां दीक्षां सम्यक् विधातुमिच्छुस्तादृशीं तदनुगुणां वासनां श्रयेत् येन अनयोस्तदुचितैव तत्तत्फलसंपत्तिः स्यात् ॥

ननु परं प्रति एवं प्रयत्नेन अस्य किं स्यादित्याशङ्क्य आह

आयातशक्तिपातस्य
दीक्षां प्रति न दैशिकः॥३५॥
अवज्ञां विदधीतेति
शंभुनाज्ञा निरूपिता ।

यदुक्तं

'न चावज्ञा क्रियाकाले संसारोद्धरणं प्रति ।
मन्त्रदीक्षाव्रतादेशे शिष्यधुङ्कारकी भवेत् ॥'

इति ॥

न केवलमनानुगुण्यमत्र अस्य गुरुणा कार्यं, यावदानुगुण्यमपीत्याह

स्वधनेन दरिद्रस्य
कुर्याद्दीक्षां गुरुः स्वयम्॥३६॥
अपि दूर्वाम्बुभिर्यद्वा
दीक्षायै भिक्षते शिशुः ।

यदुक्तं

'स्वधनेनापि कर्तव्या क्षीणवित्ते शिशावपि ।'

इति । ननु गुरुरपि यदि अधन एव स्यात् तदा अनयोः का गतिरित्युक्तमपि दूर्वाम्बुभिरिति, यदभिप्रायेणैव तत्र तत्र

'.........वित्तशाठ्यं न कारयेत् ।'

इत्यादि उक्तम्। तीव्रशक्तिपातवान्वा भिक्षित्वापि दीक्षार्थं धनमादद्यादित्याह यद्वेत्यादि ॥

ननु परोपघातं विना धनार्जनं न सिद्ध्येदित्येवंदोषवतो धनस्य कथं नाम यागादौ योग्यत्वं स्यादित्याशङ्क्य आह

भिक्षोपात्तं निजं वाथ
　धनं प्राग्गुरवे शिशुः ॥३७॥
दद्याद्येन विशुद्धं त-
　द्यागयोग्यत्वमश्नुते ।

निजमिति पितृक्रमाद्यागतम् ॥

एवमादौ शिष्याणां तत्तद्भेदभिन्नतया योग्यतालक्षणमौचित्यं परीक्ष्य, स्नानभेदादि प्रतिपादयितुं पीठिकाबन्धमारचयति

तत्रादौ शिवतापत्ति-
　स्वातन्त्र्यावेश एव यः ॥३८॥
स एव हि गुरुः कार्य-
　स्ततोऽसौ दीक्षणे क्षमः ।

नच एतदशक्यानुष्ठानमित्याह

शिवतावेशिता चास्य
बहूपाया प्रदर्शिता ॥३९॥
क्रमिका बाह्यरूपा तु
स्नानन्यासार्चनादिभिः ।

प्रदर्शितेति अर्थादक्रमिका, क्रमिका तु दर्श्यते इति शेषः ॥

ननु यद्येककस्य स्नानादेः शिवतावेशं प्रति उपायत्वं,तत्किमेभिर्बहुभिरुपदिष्टैरित्याशङ्क्याह

बह्वीषु तासु तास्वेष
क्रियासु शिवतां हृदि ॥४०॥
संदधद्दृढमभ्येति
शिवभावं प्रसन्नधीः ।
शिवीभूतो यद्यदिच्छे-
त्तत्तत्कर्तुं समीहते ॥४१॥
शिवाभिमानितोपायो
बाह्यो हेतुर्न मोक्षदः ।

ततोऽस्य शिवतावेश एव दृढोऽभिमानः समीहितसिद्धिप्रद इत्याह

शिवोऽयं शिव एवास्मी-
त्येवमाचार्यशिष्ययोः ॥४२॥
हेतुतद्वत्तया दार्ढ्या-
भिमानो मोचको ह्यणोः ।

नच एतत् न्यायत एव सिद्धं, यावदागमतोऽपीत्याह

नाध्यात्मेन विना बाह्यं
नाध्यात्मं बाह्यवर्जितम्॥४३॥
सिद्ध्येज्ज्ञानक्रियाभ्यां तद्-
द्वितीयं संप्रकाशते ।
श्रीब्रह्मयामले देव
इति तेन न्यरूपयत् ॥४४॥

तद्द्वितीयमिति अध्यात्मलक्षणम् ॥४४॥

ननु भवतु एवं, तथापि स्नानं नाम अशुद्धेः प्रतिपक्षः। सा च शिवाभिमानिताभाजो न भवेदेवेति किं तेनेत्याशङ्क्य आह

श्रीमदानन्दशास्त्रे च
नाशुद्धिः स्याद्द्विपाश्वितः ।

किन्तु स्नानं सुवस्त्रत्वं
तुष्टिसंजननं भवेत् ॥४५॥

इति देवो न्यरूपयदिति प्राच्येन संबन्धः। तुष्टिः स्वस्वरूपौन्मुख्येन परानन्दचमत्कारः॥

अत एव स्नायतां यथायथं देहादिप्रमातृतागुणीभावेन निर्यत्नमेव परस्यां संविदि समावेशः स्यादित्याह

तत्र प्रसिद्धदेहादि-
मातृनिर्मलताक्रमात्।
अयत्नतोऽन्तरन्तः स्या-
न्नैर्मल्यं स्नायतां ततः ॥४६॥

तत इति स्नानात् ॥ ४६ ॥

ननु स्नानं नाम जलादिना बाह्येन आसेचनं, कथं च तेन एवं भवेदित्याशङ्क्य आह

स्नानं च देवदेवस्य
यन्मूर्त्यष्टकमुच्यते।
तत्रैवं मन्त्रदीप्तेऽन्त-
र्मलदाहे निमज्जनम् ॥४७॥

मलदाहे इति तन्निमित्तम्। अत्र हेतुर्मन्त्र-दीप्ते इति, अन्यथा हि गोपाला अपि गोरजोऽन्तर्गमागमादि कुर्वते, मत्स्या अपि जलेऽन्तराव-सन्तीत्यविशेषेण सर्वेषां स्वरसत एव स्नानं सिद्ध्येत् ॥ ४७ ॥

एतदेव पृथ्व्यादिक्रमेण निरूपयति

तत्रेष्टमन्त्रहृदयो
गोरजोऽन्तः पदत्रयम् ।
गत्वागत्य भजेत्स्नानं
पार्थिवं धृतिदायकम् ॥४८॥

अस्त्रमन्त्रितमृद्भूत-
मलः पञ्चाङ्गमन्त्रितैः ।
जलैर्मूर्धादिपादान्तं
क्रमादाक्षालयेत्ततः ॥४९॥

निमज्जेत्साङ्गमूलाख्यं
जपन्ना तन्मयत्वतः ।
उत्थायाशेषसज्ज्योति-
र्दैवतागर्भमम्बरे ॥५०॥

सूर्यं जलेन मालिन्या
तर्पयेद्विश्वतर्पकम् ।

इष्टेति यथाभिमतमन्त्रानुसन्धानपर इत्यर्थः। मन्त्रिलेति सप्तकृत्वः। धूतमल इति अर्थात् संहार-क्रमेण। पञ्चेति अस्त्रस्य मलस्नाने नियुक्तत्वात्। तदुक्तं

'जलस्नानेऽपि चास्त्रेण मृदं सप्ताभिमन्त्रिताम् ।'

इति,

'मलस्नानाय संहारक्रमेणोद्धूलयेत्तनुम् ।
विद्याङ्गैः पञ्चभिः पश्चाच्छिरःप्रभृति गुण्ठयेत् ॥
अभिषेकं प्रकुर्वीत मूलेनैव षडङ्गिना ।' (मा.वि.८।६)

इति च। मूलं च अत्र परेति गुरवः। मूर्धादि-पादान्तमिति आदिशब्देन वक्त्रहृद्गुह्यानां ग्रह-णम्। यद्वक्ष्यति

'कवक्त्रहृद्गुह्यपदे..................।' (५४)

इति। जलेन सूर्यं तर्पयेदिति तत्संमुखमञ्जलि-क्षेपेण उपस्थानं कुर्यादित्यर्थः। अत्र हेतुरशेष-सज्ज्योतिर्देवतागर्भमिति विश्वतर्पकमिति च ॥

विश्वतर्पकत्वमेव प्रपञ्चयति

देवान्पितॄन्मुनीन्यक्षान्
रक्षांस्यन्यच्च भौतिकम् ॥५१॥
सर्वं संतर्पयेत्प्राणो
वीर्यात्मा स च भास्करः ।
ततो जपेत्परामेकां
प्रागुक्तोच्चारयोगतः ॥५२॥
आ तन्मयत्वसंवित्ते-
र्जलस्नानमिदं मतम् ।
अग्न्युत्थं भस्म शस्त्रेण
जप्त्वा मलनिबर्हणम् ॥५३॥
कवक्त्रहृद्गुह्यपदे
पञ्चाङ्गैर्भस्म मान्त्रितम् ।
भस्ममुष्टिं साङ्गमूल-
जप्तां मूर्ध्नि क्षिपेत्ततः ॥५४॥
हस्तपादौ जलेनैव
प्रक्षाल्याचमनादिकम् ।

तर्पणं जप इत्येवं
भस्मस्नानं हि तैजसम् ॥५५॥

गोरजोवत्यनुद्रिक्ते
वायौ ह्लादिनि मन्त्रवाक् ।
गत्यागतिप्रयोगे वा
वायव्यं स्नानमाचरेत् ॥५६॥

अमले गगने व्यापि-
न्येकाग्रीभूतदृष्टिकः ।
स्मरन्मन्त्रं यदासीत
कान्या निर्मलता ततः ॥५७॥

यदि वा निर्मलाद्व्योम्नः
पतता वारिणा तनुम् ।
स्पर्शयेन्मन्त्रजपयुङ्
नाभसं स्नानमीदृशम् ॥५८॥

एवं सोमार्कतेजःसु
शिवभावेन भावनात् ।

निमज्जन्धौतमालिन्यः
　　क्व वा योग्यो न जायते ॥५९॥
आत्मैव परमेशानो
　　निराचारमहाह्रदः ।
विश्वं निमज्ज्य तत्रैव
　　तिष्ठेच्छुद्धश्च शोधकः ॥६०॥

स हि भास्कर एव देवादि सर्वं जन्तुजातं संतर्पयेत्, तेन संतर्पितेन सर्वं तर्पितं भवेदित्यर्थः, यद्विशेषानुपादानात्सर्वस्य अयं वीर्यात्मा प्राणः समस्तमिदं विश्वमेतदनुप्राणितमेवेत्यर्थः। चो हेतौ। तत इति सूर्योपस्थानानन्तरम्। एकामिति एकाक्षराम्। एतच्च आचमनाघमर्षमार्जनसामान्यन्यासपूर्वं कर्तव्यम्। यथोक्तम्

'आचम्य मार्जनं कुर्याद्विद्यया भूरिवर्णया।
न्यासं कृत्वा तु सामान्यमघमर्षं द्वितीयया॥
उपस्थानं च मालिन्या जपेच्चैकाक्षरां पराम्। (मा.वि.८।८)

इति। अग्नीति शिवाग्निः। जुह्वेति सप्तधा। मन्त्रितामिति मन्त्रितं कृत्वा। गोरजोवतीति स्पष्टः पाठः। मन्त्रेति अस्त्रं परापरा च। तदुक्तं

'रजसा गोद्युतेनैव वायव्यं स्नानमाचरेत् ।
महास्त्रमुच्चरन्गच्छेद्ध्यानयुक् पदसप्तकम् ॥
तदेव पुनरागच्छेदनुस्मृत्य परापराम् ।'

इति। निर्मलतेत्यनेन अत्र उपयोग उक्तः। एवमिति गत्यागतिप्रयोगादिना। योग्यः इति अधिकारी। महाह्रदः इति स्नानौचित्यादुक्तम्। शोधक इति परदृगवलोकना अन्यस्यापि॥६०॥

एतदेव अधिकावापेन उपसंहरति

इति स्नानाष्टकं शुद्धा-
वुत्तरोत्तरमुत्तमम् ।
सर्वत्र पश्चात्तं मन्त्र-
मेकीभूतमुपाहरेत् ॥६१॥

सर्वत्रेति स्नानाष्टकेऽपि । तमिति प्राक् सूर्यादौ न्यस्तम्। एकीभूतमिति स्वात्मना। यथोक्तं

'सूर्यादेर्मन्त्रमादाय गच्छेदस्त्रमनुस्मरन् ।'

इति ॥ ६१ ॥

एवं स्नानाष्टकेन अस्य किं स्यादित्याशङ्क्य आह

घृत्याप्यायमलप्लोष-
वीर्यव्याप्तिमृजिस्थितीः ।

अभेदं च क्रमादेति
स्नानाष्टकपरो मुनिः ॥६२॥

ननु क्षित्यादयो जडाः कथमेवं फलमादध्युरित्याशङ्क्य आह

एता ह्यनुग्रहात्मानो
मूर्तयोऽष्टौ शिवात्मिकाः ।
स्वरूपशिवरूपाभ्यां
ध्यानात्तत्फलप्रदाः ॥६३॥

स्वरूपेति शिवैकरूपत्वे हि आसामष्टकत्वमेव न भवेदित्यर्थः ॥६३॥

न केवलमेतत् स्नानादेव एवं भवेत्, यावदेतदर्चातोऽपीत्याह

अनेन विधिनार्चायां
कन्दाधारादियोजनाम् ।
कुर्वन्व्याससमासाभ्यां
धरादेस्तत्फलं भजेत् ॥६४॥

अनेन स्वरूपशिवरूपाभ्यां ध्यानाद्यात्मना विधिना धरादेः संक्षेपविस्तराभ्यामर्चानिमित्तं

कन्दाधारादौ योजनां कुर्वंस्तासां धरादिमूर्तीनां संबन्धि धृत्यादिफलं भजेत् तल्लभते इत्यर्थः ॥

ननु सर्वत्र विना मन्त्रैरर्चा न भवेदित्युक्तम् । मन्त्राश्च पराहंप्रकाशमया इति को नाम एषामेवं फले विशेष इत्याशङ्कामागमार्थप्रदर्शनेन उपशमयति

तथाहि योगसंचारे
मन्त्राः स्युर्भुवि पार्थिवाः ।
आप्ये आप्या यावदमी
शिवे शिवमया इति ॥६५॥

अध्वमध्यावस्थानां च एषां प्रतिनियतफलत्वमिति आशयः ॥ ६५ ॥

अत्रापि एतत् प्रकारान्तरेण उक्तमित्याह

श्रीनिर्मर्यादशास्त्रेऽपि
तदित्थं सुनिरूपितम् ।
धरादेश्च विशेषोऽस्ति
वीरसाधकसंमतः ॥६६॥

रणरेणुर्वीरजलं
वीरभस्म महामरुत् ।
श्मशानारण्यगगनं
चन्द्रार्कौ तदुपाहितौ ॥६७॥
आत्मा निर्धूतनिःशेष-
विकल्पातङ्कसुस्थितः ।
स्नानार्चादावित्युपास्यं
वीराणां विग्रहाष्टकम् ॥६८॥

इत्थमिति वक्ष्यमाणेन प्रकारेण, स च धरादे-रित्यादिना उक्तः । वीरजलं शिवाम्बु । वीरभस्म श्मशानाग्न्युत्थम् । महामरुत् श्मशानरजोवती वात्या ॥ ६८ ॥

न केवलमेतदेव स्नानाष्टकं वीराणामुक्तम्, यावदन्यत्र नवमं मद्यस्नानमपीत्याह

श्रीमत्त्रिशिरसि प्रोक्तं
मद्यशीधुसुरादिना ।
सुस्वादुना प्रसन्नेन
तनुना सुसुगन्धिना ॥६९॥

कन्दलादिगतेनान्त-
 र्बहिः संस्कारपञ्चकम् ।
कृत्वा निरीक्षणं प्रोक्ष्य
 ताडनाप्यायगुण्ठनम् ॥७०॥
मन्त्रचक्रस्य तन्मध्ये
 पूजां विप्रुट्प्रतर्पणम् ।
तेनात्मसेकः कलश-
 मुद्रया चाभिषेचनम् ॥७१॥
देवतातर्पणं देह-
 प्राणोभयपथाश्रितम् ।
सर्वतीर्थतपोयज्ञ-
 दानादि फलमश्नुते ॥७२॥
मद्यस्नाने साधकेन्द्रो
 मुमुक्षुः केवलीभवेत् ।

मद्यशीधुसुरादिनेति मद्यं मृद्वीकादिप्रभव-मनेकप्रकारं मद्यादिशब्दव्यपदेश्यं, शीधुरैक्षवः, सुरा विभीतकादिकृता, आदिशब्दात् तत्प्रका-

राणां वारुण्यादीनां परिग्रहः। यदाहुरायुर्वेद-
विदः

'मार्द्वीकं मधु विज्ञेयं................।'

इति,

'................शीधुस्त्विक्षुरसेन तु।'

इति,

'नातितीव्रमदा लघ्वी पथ्या वैभीतकी सुरा॥'

इति,

'प्रसन्ना वारुणी ज्ञेया परिस्रुन्मदिरा तथा।
कादम्बरी घनसुरा तदधो जगलः स्मृतः॥'

इति च। तनुनेति लघुना। अन्तर्बहिरिति तद्रू-
पेत्यर्थः। तेन निरीक्षणमन्तारूपम्, प्रोक्षणं तु
बहीरूपमिति। तदुक्तं तत्र

'निरीक्षणं मन्त्रदृशा प्रोक्षणं चार्घवारिणा॥
ताडनं चास्त्रराजेन नेत्रेणाप्यायनं तथा॥
गुण्ठनं कवचेनापि................।'

इति। कलशमुद्रयेति तस्याश्च

'संहताङ्गुलिकौ पाणी पृष्ठार्धेन्दूदराहितौ।
सुश्लिष्टमूलावङ्गुष्ठौ कुम्भमुद्रा प्रकीर्तिता॥'

अन्यत्र लक्षणम्। उक्तं च तत्र

'सिञ्चेत्तु विग्रहं तेन बद्ध्वा मुद्रां तु कालशीम्।
कृत्वाभिषेकं विधिवत्तर्पयेन्मन्त्रदेवताः॥'

इति ॥

मद्यस्नानमेव च केवलीभावे कस्मात् निमित्त-
मित्याशङ्क्य आह

यतः शिवमयं मद्यं
　सर्वे मन्त्राः शिवोद्भवाः ॥७३॥
शिवशक्त्योर्न भेदोऽस्ति
　शक्त्युत्थास्तु मरीचयः ।
तासामानन्दजनकं
　मद्यं शिवमयं ततः ॥७४॥
प्रबुद्धे संविदः पूर्णे
　रूपेऽधिकृतिभाजनम् ।

अधिकृतिभाजनमिति प्रबुद्धपूर्णसंविद्रूपतया
केवलीभवेदित्यर्थः ॥

ननु अन्येषामयमाशयः—यत्

'आदौ स्नानं प्रकुर्वीत सर्वकिल्बिषनाशनम् ।'

इति फलश्रुतेः स्नानं न यजनाङ्गमिति ।
यदाहुः 'फलवत्संनिधावफलं तदङ्गम्' इति ।
अयुक्तमेतदित्याह

मन्त्रध्यानसमाधान-
　　भेदात्स्नानं तु यन्न तत् ॥७५॥
युक्तं स्नानं यतो न्यास-
　　कर्मादौ योग्यतावहम् ।
अस्य स्नानाष्टकस्यास्ति
　　बाह्यान्तरतया द्विता ॥७६॥

यत् पुनर्मन्त्रध्यानादेर्भेदमाश्रित्य ततो भिन्नं न यजनाङ्गं स्नानमित्युच्यते, तत् न युक्तं यतः स्नानं

'स्नातोऽधिकारी भवति दैवे पित्र्ये च कर्मणि ।'

इति दृशा मन्त्रन्यासादावधिकारलक्षणां योग्यतामावहति तदाधानेन यजनोपकारकमेवेत्यर्थः। नच सर्वात्मनैव अफलमङ्गमिति नियमो 'गोदोहनेन पशुकामस्य प्रणयेत्' इति अङ्गस्यापि फलश्रुतिदर्शनादङ्गिन्यपि विश्वजिदादौ फलादर्शनात् ॥ ७६ ॥

तत्र एतत् बाह्यतया निरूपितामिति आन्तरतयापि अभिधत्ते

आन्तरं तद्यथोर्ध्वेन्दु-
धारामृतपरिप्लवः ।
यतो रन्ध्रोर्ध्वगाः सार्ध-
मङ्गुलं व्याप्य संस्थिताः॥७७॥
मूर्तयोऽष्टावपि प्रोक्ताः
प्रत्येकं द्वादशान्ततः ।

ऊर्ध्वेन्द्विति द्वादशान्तस्थस्य शिवचन्द्रमसः। अत्र हेतुर्यत इत्यादि ॥

ननु एतद्युगपदेव स्नानाष्टकं कार्यं न वेत्याशङ्क्य आह

एषामेकतमं स्नानं
कुर्याद्वित्र्यादिशोऽपिवा ॥७८॥

एकतममिति देशकालाद्यनुसारम् ॥ ७८ ॥

एतदुपसंहृत्य अन्यदवतारयति

इति स्नानविधिः प्रोक्तो
भैरवेणामलीकृतौ ।
स्नानानन्तरकर्तव्य-
मथेदमुपदिश्यते ॥ ७९ ॥

तदेव आह

भावं प्रसन्नमालोच्य
　　व्रजेद्यागगृहं ततः ।

ननु यागवेश्मैव कुत्र कार्यमित्याशङ्कां गर्भी-कृत्य अनुजोद्देशोद्दिष्टं स्थानकल्पनाख्यं प्रमेय-मवतारयति

पर्वताग्रनदीतीरै-
　　कलिङ्गादि यदुच्यते ॥८०॥
तद्बाह्यमिह तत्सिद्धि-
　　विशेषाय न मुक्तये ।
आभ्यन्तरं नगाग्रादि
　　देहान्तःप्राणयोजनम् ॥८१॥
साधकानामुपायः स्या-
　　त्सिद्ध्ये नतु मुक्तये ।
पीठस्थानं सदा याग-
　　योग्यं शास्त्रेषु भण्यते ॥८२॥
तच्च बाह्यान्तराद्रूपा-
　　द्बहिर्देहे च सुस्फुटम् ।

यदीति स्थाने इहेति स्पष्टः पाठः। ननु एतत् त्रिविधमेव स्थानमुत अन्यदपीत्याशङ्क्य आह पीठेत्यादि ॥

किमत्र प्रमाणमित्याशङ्क्य आह

यतः श्रीनैशसञ्चारे
परमेशो न्यरूपयत् ॥८३॥

तदेव अर्थद्वारेण आह

तस्येच्छा पीठमाधारो
यत्रस्थं सचराचरम् ।
अग्र्यं तत्कामरूपं स्या-
द्बिन्दुनादद्वयं ततः ॥८४॥
नादपीठं पूर्णगिरि-
र्दक्षिणे वामतः पुनः ।
पीठमुड्डयनं बिन्दु-
मुख्यं पीठत्रयं त्विदम् ॥८५॥
ज्ञेयं संकल्पनारूप-
मर्धपीठमतः परम् ।

शाक्तं कुण्डलिनी वेद-
　　कलं च त्र्युपपीठकम् ॥८६॥

देवीकोट्टोज्जयिन्यौ द्वे
　　तथा कुलगिरिः परः।
लालनं बैन्दवं व्याप्ति-
　　रिति संदोहकत्रयम् ॥८७॥

पुण्ड्रवर्धनवारेन्द्रे
　　तथैकाम्रमिदं बहिः।
नवधा कथितं पीठ-
　　मन्तर्बाह्यक्रमेण तत् ॥८८॥

क्षेत्राष्टकं क्षेत्रविदो
　　हृदम्भोजदलाष्टकम्।
प्रयागो वरणा पश्चा-
　　दट्टहासो जयन्तिका ॥८९॥

वाराणसी च कालिङ्गं
　　कुलूता लाहुला तथा।

उपक्षेत्राष्टकं प्राहु-
हृत्पद्माग्रदलाष्टकम् ॥९०॥

विरजैरुडिका हाला
एला पूः क्षीरिका पुरी ।
मायाख्या मरुदेशश्च
बाह्याभ्यन्तररूपतः ॥९१॥

हृत्पद्मदलसन्धीना-
मुपसंदोहकाष्टता ।
जालन्धरं च नैपालं
कश्मीरा गर्गिका हरः ॥९२॥

म्लेच्छदिग्द्वारवृत्तिश्च
कुरुक्षेत्रं च खेटकम् ।
द्विपथं द्वयसंघट्टा-
त्रिपथं त्रयमेलकात् ॥९३॥

चतुष्पथं शक्तिमतो
लयात्तत्रैव मन्वते ।

नासान्तताल्लुरन्ध्रान्त-
मेतद्देहे व्यवस्थितम् ॥९४॥
भ्रूमध्यकण्ठहृत्संज्ञं
मध्यमं तदुदाहृतम् ।
नाभिकन्दमहानन्द-
धाम तत्कौलिकं त्रयम् ॥९५॥
पर्वताग्रं नदीतीर-
मेकलिङ्गं तदेव च
किं वातिबहुना सर्वं
संवित्तौ प्राणगं ततः ॥९६॥
ततो देहस्थितं तस्मा-
द्देहायतनगो भवेत् ।

नच अस्याः पीठमिति संज्ञामात्रमित्युक्तमाधार इति यत्रस्थं सचराचरमिति च । तदुक्तं तत्र

'तस्येच्छा या स्मृता शक्तिः पीठत्वं समुपागता ।
पीठमाधारभूतं स्यात्तत्रस्थं सचराचरम् ॥
तेन पीठाभिधानं तु शक्तेर्नैमित्तिकं स्मृतम् ।'

इति । अग्र्यमिति मुख्यम्, अत एव कामस्य इच्छाया रूपमित्युक्तम् । तत इति अग्र्यात् कामरूपात् । तदुक्तं तत्र

'ततः पीठद्वयं जातं बिन्दुनादमयं प्रिये ।
वामे बिन्दुर्विनिर्दिष्टो दक्षिणे नाद उच्यते ॥
अग्रपीठं तु पूर्वोक्तं शाक्तं तु परमेश्वरि ।
एवं पीठत्रयं जातं कामरूपादि यत्स्मृतम् ॥
अग्र्यं तत्कामरूपं स्याद्दक्षे पूर्णगिरिः स्मृतः ।
उड्डियानाभिधानं तु उत्तरे तु तृतीयकम् ॥

इति । 'ज्ञेयसंकल्पनारूपमर्धपीठमतः परम् ।' इति अर्धं 'नवधा कथितं पीठमन्तर्बाह्यक्रमेण तत् ।' इत्युपसंहारविरुद्धमनागामिकं चेत्य-नार्षत्वादुपेक्ष्यम् । वेदकलश्चतुष्कलो बिन्दुः । त्र्युपपीठकमिति त्रयाणामुपपीठानां समाहारः । तदुक्तं तत्र

'शक्तेः शाक्तं महापीठं कौण्डलीपदमध्यगम् ।
बिन्दोस्तु बैन्दवं पीठं चतुष्कलमगोलकम् ॥
नादजं व्याप्त्यधो ज्ञेयं द्विरन्ध्रस्योर्ध्वगं प्रिये ।
उपपीठत्रयं ह्येतद्बाह्यतः शृणु नामतः ॥
देवीकोट्टं स्मृतं शाक्तं बिन्दुश्चोज्जयिनी स्मृता ।
कौलो गिरिः स्मृतो मध्ये व्यापिन्यां व्याप्त्यधोगतिः॥'

इति । व्याप्तिः शक्तिः प्रसरस्थानमिति । संदोहकेति उपपीठनिःष्यन्दप्रायत्वात् । तदुक्तं तत्र

'पुनः संदोहसंज्ञास्तु त्रयस्त्वेते वरानने ।
ललनागर्तकं शाक्तं बैन्दवं पुटमध्यतः ॥
नादजं व्याप्तिमध्यस्थं त्रयस्त्वेते समासतः ।
पुण्ड्रवर्धनसंज्ञस्तु ललनायामुदाहृतः ॥
वारेन्द्रं बैन्दवं ज्ञेयमेकाम्रं व्याप्तिसंज्ञितम् ।'

इति । नवधेति त्रयाणां पीठोपपीठसंदोहानां त्रैविध्यात् । पुरीति राजपुरी । मायाख्येति मायापुरी । तदुक्तं तत्र

'क्षेत्राष्टकं तु पत्राणि हृत्पद्मस्य वरानने ।
उपक्षेत्रा दलाग्राणि संदोहा दलसन्धयः ॥
चतुर्विंशतिरेवं स्यात्.................. ।'

इत्युपक्रम्य नामोद्देशेन

'खेटकं च कुरुक्षेत्रं संदोहा वीरनायकाः ।'

इत्यन्तम् । द्वयेति वामदक्षनाडीलक्षणस्य । त्रयेति मध्यशक्त्या सह । शक्तिमत इति आत्मनः । नासान्तेति नासायाः शक्तेरन्तो व्याप्त्यादिशब्दव्यपदेश्यं प्रसरस्थानम् । रन्ध्रेति ब्रह्मरन्ध्रस्य अन्तश्चूलिकाग्रम् । मध्यमामिति आणवम् । कौलिकमिति शाक्तम्, अर्थादाद्यं शाम्भवम् । तदेवेति नासान्तादित्रिप्रकारमपि । तदुक्तं तत्र

‘ द्विपथं वामदक्षाभ्यां नाड्योर्वाहः परो मतः ।
त्रिपथं परया प्रोक्तं तदेव तु विशिष्यते ॥
यत्तत्पूर्वं समाख्यातं व्याप्यधः पिण्डमुत्तमम् ।
चतुष्पथं तु तत्रैकं द्वितीयं तालुमध्यतः ॥
तृतीयं चूलिकाग्रे तु त्रिकं तत्तु विजानत ।
भ्रूमध्ये तु परं प्रोक्तं चतुष्पथमतः परम् ॥ ’

इत्यादि अनेकप्रकारम्। ननु एतत् शास्त्रान्तरेष्वपि

‘ प्रयागो नाभिसंस्थस्तु वरणा हृत्प्रदेशतः ।
कुलाद्रिः कण्ठसंस्थस्तु भीमनादस्तु तालुकः ॥
बिन्दुस्थाने जयन्त्याख्यं नादाख्ये तु चरित्रकम् ।
एकाम्रं शक्तिमध्ये तु ज्ञातव्यं विदितात्मकैः ॥
गुरुवक्त्रगतं प्रोक्तं कोटिवर्षं तथाष्टमम् ।’

इत्यादिना अन्यथा उक्तं, तत्किमनेन एवंविधेन उपदिष्टेन स्यात्। तात्पर्यमेव अत्र किंचिदुच्यतां, बाढमित्याह किं वेत्यादि । ततः प्राणगामीति संविदः प्रथमं प्राणे परिणामात् । तस्मादिति देहे एव पीठादेरवस्थानात् हेतोः ॥

ननु यदि एवं स्वदेहायतनगेनैव भाव्यं, किं तद्बाह्यस्य पीठादेर्वचनेनेत्याशङ्क्य आह

बाह्ये तु तादृशान्तःस्थ-
योगमार्गविशारदाः ॥९७॥

देव्यः स्वभावाज्जायन्ते
पीठं तद्बाह्यमुच्यते ।

देव्यो हि स्वभावत एव समनन्तरोक्तव्याप्त्या आन्तरज्ञानयोगादिवैचक्षण्यात् बाह्ये जायन्ते बहिरनुग्रहनिमित्तमभिव्यक्तिमासादयन्तीति पीठं बाह्यमुच्यते तथाभिधातुमुचितमित्यर्थः ॥

ननु देव्यश्चेदेवं, तावता बहिः पीठत्वं कुतस्त्यमित्याशङ्कां दृष्टान्तप्रदर्शनेन उपशमयति

यथा स्वभावतो म्लेच्छा
अधर्मपथवर्तिनः ॥ ९८ ॥
तत्र देशे नियत्येत्थं
ज्ञानयोगौ स्थितौ क्वचित् ।

यथा स्वभावतो म्लेच्छानामधर्मपरत्वात् तद्देशे एव नियमेन इत्थमधर्म एव सर्वजनविषयतया वर्तते, तथा ज्ञानयोगशालित्वात् देवीनां तदभिव्यक्तिस्थाने क्वचित्पीठादावेव, नतु सर्वत्र, ज्ञानयोगादीति युक्तमुक्तं तत्पीठमुच्यते इति ॥

ननु एवं तत्र चेत् ज्ञानयोगादि स्थितं, तावता अन्येषां किं भवेदित्याशङ्कामुपशमयितुं दृष्टान्तयति

यथाचातन्मयोऽप्येति
पापितां तैः समागमात् ॥९९॥
तथा पीठस्थितोऽप्येति
ज्ञानयोगादिपात्रताम् ।

अतन्मयो निष्पापः, ज्ञानयोगादिबहिष्कृतश्च । तैः पापिभिः, पीठस्थितैश्च ॥

ननु पीठादेर्बहिर्भ्रमणात् यदि एवं ज्ञानयोगादि सिद्ध्येत्, तत्किमन्तरनुसन्धानेनेत्याशङ्क्य आह

मुख्यत्वेन शरीरेऽन्तः
प्राणे संविदि पश्यतः॥१००॥
विश्वमेतत्किमन्यैः स्या-
द्बहिर्भ्रमणडम्बरैः

शरीरादेश्च यथायथमान्तरत्वं विवक्षितम् ॥

सच अयं पीठादेर्बुभुक्ष्वेकाविषयो भेद इत्याह

इत्येवमन्तर्बाह्ये च
तत्तच्चक्रफलार्थिनाम् ॥१०१॥
स्थानभेदो विचित्रश्च
स शास्त्रे संख्ययोज्झितः ।

स्थानभेद इति अत्र च्छेदः । स चेति स्थानभेदः । शास्त्रे इति शैवे ॥

तदेव दर्शयति

श्रीवीरावलिहृदये
सप्त स्थानानि शक्तिकमलयुगम् १०२
सुरपथचतुष्पथाख्य-
श्मशानमेकान्तशून्यवृक्षौ च ।
इति निर्वचनगुणस्थि-
त्युपचारदृशा विबोध एवोक्तः॥१०३॥
तदधिष्ठिते च चक्रे
शारीरे बहिरथो भवेद्यागः ।

शक्तीति तदुदयस्थानं जन्माधारः । सुरपथेति सुराणां ब्रह्मविष्णुरुद्राणां त्रित्वात् त्रिपथम् । शून्येति अन्याभावादेकवृक्षः । यदुक्तम्

'एकवृक्षः शिवः प्रोक्तः................।'

इति । निर्वचनेनेति यतो विबोध एव अनुग्राह्याणां वरणात्पाशानां च क्षपणात् वृक्ष उक्तः । गुणस्थितीति अन्यवैवित्तयादेकान्त इव एकान्तः । उपचारेति

'तथाप्यस्य परं स्थानं हृत्पङ्कजसमुद्गकम् ।'

इत्युक्त्या तात्स्थ्यात् हृत्कमलं 'मञ्चाः क्रोशान्ति' इतिवत् । एवमन्यत्रापि ज्ञेयम् । तदधिष्ठित इति तच्छब्देन विबोधपरामर्शः ॥

अत एव बोधस्य सर्वत्र अविशेषात् तदैकात्म्यापत्तिरूपायां मुक्तौ न काचित् स्थानभेदकल्पनेत्याह

मुक्तये तन्न यागस्य
स्थानभेदः प्रकल्प्यते ॥१०४॥
देशोपाया न सा यस्मा-
त्सा हि भावप्रसादतः ।

नच एतत् न्यायैकशरणमित्याह

उक्तं च श्रीनिशाचारे
सिद्धिसाधनकाङ्क्षिणाम् ॥१०५

स्थानं मुमुक्षुणा त्याज्यं
सर्पकञ्चुकवत्त्विदम् ।
मुक्तिर्न स्थानजनिता
यदा श्रोत्रपथं गतम् ॥१०६॥
गुरोस्तत्त्वं तदा मुक्ति-
स्तद्दार्ढ्याय तु पूजनम् ।

इदमिति नियतं पीठाद्यात्म स्थानम्।यदुक्तं तत्र

'कथितं पूर्वमेवं यन्मया तुभ्यं वरानने ।
सिद्धिसाधनकं ह्येतद्विधानं सिद्धिकाङ्क्षिणाम् ॥
मोक्षार्थी सर्वमेतत्तु सर्पकञ्चुकवत्त्यजेत् ।
मुक्तस्तेनैव कालेन यदा श्रोत्रपथं गतम् ॥
गुरोर्वक्त्राद्विनिर्यातं ज्ञानं परमदुर्लभम् ।
सकृज्ज्ञात्वा स्वसंवित्तिं किमन्यत्तु जिगीषति ॥'

इति ॥

ननु निरधिकरणस्तावद्यागो न भवेदिति मुमुक्षुणापि स्थानभेदोऽवश्याश्रयणीयः, तत्कथमेतदुक्तं मुक्तये यागस्य न स्थानभेद इतीत्याशङ्क्य आह

यत्र यत्र हृदम्भोजं
विकासं प्रतिपद्यते ॥१०७॥

तत्रैव धाम्नि बाह्येऽन्त-
यगश्रीः प्रतितिष्ठति ।

ननु तत्रापि पीठादिगमनेन सौकर्यं किं न स्यादित्याशङ्क्य आह

नान्यत्रगत्या मोक्षोऽस्ति
सोऽज्ञानग्रन्थिकर्तनात्॥१०८॥
तच्च संविद्विकासेन
श्रीमद्वीरावलीपदे ।

तदिति अज्ञानग्रन्थिकर्तनम् । नच स्वोपज्ञमेवोक्तमित्युक्तं श्रीमद्वीरावलीपदे इति ॥

गुरूणां पुनरयमाशयो यदुभयत्रापि भावप्रसाद एव निमित्तमित्याह

गुरवस्तु विमुक्तौ वा
सिद्धौ वा विमला मतिः॥१०९॥
हेतुरित्युभयत्रापि
यागौको यन्मनोरमम् ।

यत् मनोरमं, तत् यागौक इति विधिः । अत एव तत्र तत्र अविशेषेणैव

'तत्रादौ यागसदनं शुभक्षेत्रे मनोरमम् ।'

इति, तथा

'एकान्ते विजने रम्ये.................।'

इति, तथा

.................यत्र वा रमते मनः ।'

इति उक्तम् ॥

ननु तत्तद्देशकालादिसामग्रीवशेन सा सा सिद्धिः समुन्मिषतीति सर्वत्र उक्तं, तत्कथं तत्र भाववैमल्यमेव निमित्ततां यायादित्याशङ्क्य आह

नियतिप्राणतायोगा-
त्सामग्रीतस्तु यद्यपि ॥११०॥
सिद्धयो भाववैमल्यं
तथापि निखिलोत्तमम् ।

ननु देशादौ निखिलेऽपि उपकरणजाते सति अस्यैव कस्मादुत्तमत्वमित्याशङ्क्य आह

विमलीभूतहृदयो
यत्तत्र प्रतिबिम्बयेत् ॥१११॥
साध्यं तदस्य दार्ढ्येन
सफलत्वाय कल्पते ।

तत्रेति विमलीभूते हृदये। तदिति साध्यम् ॥

किमत्र प्रमाणमित्याशङ्क्य आह

उक्तं श्रीसारशास्त्रे च
निर्विकल्पो हि सिध्यति॥११२॥
क्लिश्यन्ते सविकल्पास्तु
कल्पोक्तेऽपि कृते सति ।

महाजनैरपि एतत् परिगृहीतमित्याह

तदाक्रम्य बलं मन्त्रा
अयमेवोदयः स्फुटः ॥११३॥
इत्यादिभिः स्पन्दवाक्यै-
रेतदेव निरूपितम् ।

यदुक्तं तत्र

'तदाक्रम्य बलं मन्त्राः सर्वज्ञबलशालिनः ।
प्रवर्तन्तेऽधिकाराय करणानीव देहिनाम् ॥
तत्रैव संप्रलीयन्ते शान्तरूपा निरञ्जनाः ।
सहाराधकचित्तेन तेनैते शिवधर्मिणः ॥ (२।२)

इति उपक्रम्य

अयमेवोदयस्तस्य ध्येयस्य ध्यायिचेतसि ।
तदात्मतासमापत्तिरिच्छतः साधकस्य या ॥
इयमेवामृतप्राप्तिरयमेवात्मनो ग्रहः ।
इयं निर्वाणदीक्षा च शिवसद्भावदायिनी ॥' (२।६)

इति ॥

एतदेव उपसंहरति

तस्मात्सिद्ध्यै विमुक्त्यै वा
पूजाजपसमाधिषु ॥११४॥
तत्स्थानं यत्र विश्रान्ति-
सुन्दरं हृदयं भवेत् ।

एवं स्थानकल्पनमभिधाय, सामान्यन्यास-भेदमासूत्रयति

यागौकः प्राप्य शुद्धात्मा
बहिरेव व्यवस्थितः ॥११५॥
न्यासं सामान्यतः कुर्या-
द्बहिर्यागप्रसिद्धये ।

तदेव आह

मातृकां मालिनीं वाथ
द्वितयं वा क्रमाक्रमात् ॥११६॥
सृष्ट्यप्ययद्वयैः कुर्या-
देकैकं संघशो द्विशः ।

क्रमाक्रमादिति आदौ मातृका, ततो मालिनी, तद्विपर्ययो वा । अप्ययः संहारः । एकैकमिति सृष्ट्याद्यन्यतमरूपतया । संघश इति सृष्ट्यादित्रैरूप्येण । द्विशो मातृकामालिनीगतत्वेन ॥

एतदेव विभजति

ललाटवक्त्रे दृक्कर्ण-
नासागण्डरदौष्ठगे ॥११७॥
द्वये द्वये शिखाजिह्वे
विसर्गान्तास्तु षोडश ।
दक्षान्ययोः स्कन्धबाहु-
कराङ्गुलिनखे कचौ ॥११८॥
वर्गौ टतौ क्रमात्कट्या-
मूर्वादिषु नियोजयेत् ।
पवर्गं पार्श्वयोः पृष्ठे
जठरे हृद्यथो नव ॥११९॥
त्वग्रक्तमांससूत्रास्थि-
वसाशुक्रपुरोगमान् ।

इत्येष मातृकान्यासो
मालिन्यास्तु निरूप्यते॥१२०॥

द्वये द्वये इति दृगादौ दक्षवामरूपेण । रदादौ तु अधऊर्ध्वक्रमेण । क्रमादिति दक्षवामजङ्घारूपात् । ऊर्वादीति आदिशब्दात्पादाङ्गुलिनखग्रहणम् । पार्श्वयोरिति दक्षवामयोः । सूत्राणि स्नायवः । तदुक्तम्

'अ ललाटे द्वितीयं च वक्त्रे संपरिकल्पयेत् ।
इ ई नेत्रद्वये दत्त्वा उ ऊ कर्णद्वये न्यसेत् ॥
ऋ ॠ नासापुटे तद्वत् ऌ ॡ गण्डद्वये न्यसेत् ।
ए ऐ अधोर्ध्वदन्तेषु ओऔकारौ तथोष्ठयोः ॥
अं शिखायां विसर्गेण जिह्वां संपरिकल्पयेत् ।
दक्षिणस्कन्धदोर्दण्डकराङ्गुलिनखेषु च ॥
कवर्गं विन्यसेद्वामे तद्वच्चाद्यमनुक्रमात् ।
टताद्यौ पूर्ववद्वर्गौ नितम्बोर्वादिषु न्यसेत् ॥
पाद्यं पार्श्वद्वये पृष्ठे जठरे हृद्यनुक्रमात् ।
त्वग्रक्तमांससूत्रेषु यवर्गं परिकल्पयेत् ॥
शाद्यमस्थिवसाशुक्रप्राणकोशेषु पञ्चकम् ।'

इति । एतद्वाच्याश्च पञ्चाशद्रुद्रा एकीकाराह्निके वक्ष्यन्ते इति तत एव अवधार्याः ॥

मालिनीन्यासमेव निरूपयति

न शिखा ऋ ॠ ऌ ॡ च
शिरोमाला थ मस्तकम् ।
नेत्राणि चोर्ध्वे घोऽन्ये ई
घ्राणं मुद्रे णु णू श्रुती ॥१२१॥
बकवर्गइआ वक्त्र-
दन्तजिह्वागिरि क्रमात् ।
वभयाः कण्ठदक्षादि-
स्कन्धयोर्भुजयोर्डढौ ॥१२२॥
ठो हस्तयोर्झञौ शाखा
ज्वटौ शूलकपालके ।
प हृच्छलौ स्तनौ क्षीर-
मा स जीवो विसर्गयुक् ॥१२३॥
प्राणो हवर्णः कथितः
षक्षावुदरनाभिगौ ।
मशान्ता कटिगुह्योरु-
युग्मगा जानुनी तथा ॥१२४॥

एऐकारौ तत्परौ तु
जङ्घे चरणगौ दफौ ।

शिरोमाला कपालारम्भिका । मस्तकमिति तन्मध्यम् । ऊर्ध्वे इति ललाटे । अन्ये इति दक्षवामे । णु णू श्रुती मुद्रे इति आर्थः क्रमः, तेन णकारः कर्णौ, तद्भूषणमुकार ऊकारश्च । यच्छ्रीसिद्धातन्त्रं

'झसप्तमौ स्थितौ कर्णौ तयोर्मुद्रे तु ईपरौ ।'

इति । आ इति अकारस्य बहुवचने रूपम् । आदिना वामः स्कन्धः, तेन दक्षिणे स्कन्धे भ, वामे य । भुजयोर्दक्षवामयोः । शाखा दक्षवामकराङ्गुलयः । त्रेति दण्डेन सह शूलम्, तेन शूलस्य दण्डे रेफः, शिखासु जकारः । स च उत्तानो येन साक्षात्शूलत्वं स्यात् । यच्छ्रीसिद्धातन्त्रे

'दक्षिणे च करे ज्ञेयं शूलं दण्डे पसप्तमः ।
उत्तानस्तु प्रदातव्यः खकारस्य तु सप्तमः ॥
साक्षाच्छूलं भवेदेवं युक्तं शृङ्गैस्त्रिभिः प्रिये ।'

इति । जीव इति आत्मा सामान्यप्राणात्मा च । तयोश्च अभेदादेकतया निर्देशः, तेन साक्षादात्मनि सकारः, प्राणात्मनि तु विसर्गः । प्राण इति

विशिष्टः। मशान्ता इति मकारशकारानुसारत-काराः। जान्वादि दक्षादिक्रमेण। तत्परौ ओ-औकारौ। एतद्वाच्याश्च पञ्चाशत् नादिन्यादि-फेत्कारिकान्ताः शक्तयस्तत्र तत्र उक्ताः। तथाच श्रीत्रिशिरोभैरवः

'नादिनी तु शिखाग्रस्था नकाराक्षरसंज्ञिता।
ऋ ॠ ऌ ॡ निवृत्त्याद्या मालिका शिरसि स्थिता॥
थ शिरोग्रं सती देवी ध नेत्रे प्रियदर्शना।
ई गुह्यशक्तिर्नासास्था व्याप्तास्ते नेत्रमध्यतः॥
व्यापयित्वा स्थिता देवी च तृतीयं च लोचनम्।
चामुण्डा परमेशानी ललाटस्था विराजते॥
बकारो वदनं तस्या वज्रिणी शक्तिरव्यया।
कवर्गो दशनास्तीक्ष्णाः कङ्कटा कालिका शिवा॥
घोरघोषा शिविराख्या कवर्गे संप्रकीर्तिताः।
मायादेवी इ जिह्वा तु अ वाग्वागीश्वरी मता॥
नारायणी ण कर्णौ तु तयोरु ऊ च भूषणम्।
मोहनी च तथा प्रज्ञा व कण्ठशिखिवाहनी॥
लामा विनायिकी देवी डढौ बाहुद्वयं विभोः।
पूर्णिमा हस्तदेशस्था ठकाराख्या विभोर्मता॥
झङ्कारी कुन्दना चैव झ–ञावङ्गुलयः क्रमात्।
कापालिनी वामकरे टकारः परमेश्वरी॥
दीपनी शूलदण्डश्च रेफः सम्यगुदाहृतः।
ज जयन्ती भवेच्छूलं देवदेव्या महेश्वरि॥

भीषणी वायुवेगा च स्कन्धयोरुभयोर्भ-यौ ।
पावनी तु प हृल्लग्ना उदरं षश्च लम्बिका ॥
संहारिका क्षकारोऽयं नाभौ देवस्तु भैरवि ।
छगली पूतना चेति स्तनौ छ-लौ प्रकीर्तितौ ॥
आ मोटरी तद्गतं तु क्षीरमा परिकीर्तितम् ।
परमात्मा सकारोऽयं ह प्राणः शक्तिरम्बिका ॥
इच्छाशक्तिर्विसर्गाख्या व्याप्य प्राणात्मनि स्थिता ।
म नितम्बं महाकाली श गुह्यं कुसुमायुधा ॥
शुक्रा देवी भवेच्छुक्रमनुस्वारस्तु भैरवी ।
तारा तकार ऊरुस्था ए ऐ ज्ञानक्रिये उभे ॥
जानुनी संस्थिते देवि भैरव्यास्तु महात्मनः ।
गायत्री चैव सावित्री ओ औ जङ्घे प्रकीर्तिते ॥
दहनी दक्षपादस्था वामे फेत्कारिका द-फौ ।'

इति । एतच्च श्रीमतभट्टारकादावपि सृष्टि-संहारभङ्ग्या उभयथा विभज्य उक्तमिति स्वयमेव ततोऽपि अवधार्यम्, ग्रन्थविस्तरभयात्तु प्रातिपद्येन न संवादितम् ॥

तस्या एव उपसंहारगर्भं स्वरूपमाचष्टे

इत्येषा मालिनी देवी
शक्तिमत्क्षोभिता यतः ॥१२५
कृत्यावेशात्ततः शाक्ती
तनुः सा परमार्थतः ।

इति एवमुक्ता एषा भगवती यतः शक्तिमता

'बीजमत्र शिवः..........।' ( मा० वि० ३।१२ )

इत्युक्त्या वाच्यवाचकयोरभेदाद्वर्गेण क्षोभिता विसंष्ठुलतां स्वसांमुख्यं च आपादिता, ततः कृतिक्रियाकर्मण्यावेशात् सा परमार्थतः शाक्ती तनुर्बहिरुल्लिलसिषायोगादुन्मग्ननिजस्वरूपेत्यर्थः॥

अत एव अस्याः सिसृक्षाभिमुख्यात् निखिलसिद्ध्यादिवितरणे परं सामर्थ्यमित्याह

अन्योन्यं बीजयोनीनां
क्षोभाद्वैसर्गिकोदयात् ॥१२६॥
कां कां सिद्धिं न वितरे-
त्किं वा न्यूनं न पूरयेत्।

तदुक्तम्

'अथान्यत्संप्रवक्ष्यामि मालिन्याः कर्म चोत्तमम्।
वश्यविद्वेषणोच्चाटस्तोत्रस्तम्भनमारणम् ॥
ध्यानमात्राद्भवेद्देवि युञ्जतो यस्य सुव्रते।'

इति, तथा

'प्रायश्चित्तेषु सर्वेषु जपेन्मालामखण्डिताम्।
भिन्नां वाप्यथवाभिन्नां व्यतिक्रमबलाबलात् ॥
सकृज्जपात्समारभ्य यावल्लक्षत्रयं प्रिये।' (मा०वि०१३।१८)

इति ॥

ननु बीजयोनीनामनेकप्रकारः शास्त्रेषु क्षोभ उक्तः, तत् कथमस्या एव एवं सामर्थ्यमित्युच्यते इत्याशङ्क्य आह

योनिबीजार्णसांकर्यं
　　बहुधा यद्यपि स्थितम् ॥ १२७ ॥
तथापि नादिफान्तोऽयं
　　क्रमो मुख्यः प्रकीर्तितः ।

मुख्यत्वमेव दर्शयति

फकारादिसमुच्चारा-
　　न्नकारान्तेऽध्वमण्डलम् ॥ १२८
संहृत्य संविदा पूर्णा
　　सा शब्दैर्वर्ण्यते कथम् ।
अतः शास्त्रेषु बहुधा
　　कुलपुत्तलिकादिभिः ॥ १२९ ॥
भेदैर्गीता हि मुख्येयं
　　नादिफान्तेति मालिनी ।

इह खलु परा परमेश्वरी संवित् प्रथमं प्रति-
योग्यभावमवभासयन्ती परनादैकवृत्तितामश्नु-
वाना विश्वमवबिभासयिषुः संजीवनीबीजच-
तुष्टयासूत्रणद्वारेण सकलमेव भावजातं संजी-
वयन्त्यपि परामर्शसारतया नादे एव विश्रा-
न्तिमाश्रयन्ती पुनरुद्वेष्टनभङ्ग्या स्थूलान्त्यना-
दप्रथनपुरःसरं राववर्णोच्चारक्रमेण निषेधपरा-
मर्शैकरूपे शून्यात्मनि निखिलमिदमध्वमण्ड-
लमुपसंहरन्ती स्वात्ममात्रविश्रान्तेः परानपेक्ष-
तया पूर्णतामवलम्बमाना सदसदादिपदव्य-
पदेशपात्रतामसहमाना विकल्पयितुं न शक्यते
इति इयं शास्त्रान्तरेषु कुलपुत्तलिकादिभिर्भेदै-
र्बहुधा गीतापि नादिफान्तस्वरूपा मालिनी
मुख्या तत्तदनेकप्रकारबीजयोन्यात्मकक्षोभा-
न्तरविलक्षणेत्यर्थः ॥

ननु भवतु नाम एवं, मातृकामालिन्योः पुन-
रेवंशब्दप्रवृत्तौ किं निमित्तमित्याशङ्क्य आह

शब्दराशेर्भैरवस्य
यानुच्छूनतयान्तरी ॥ १३० ॥

सा मातेव भविष्यत्त्वा-
　　त्तेनासौ मातृकोदिता ।
मालिनी मालिता रुद्रै-
　　र्धारिका सिद्धिमोक्षयोः ॥१३१॥
फलेषु पुष्पिता पूज्या
　　संहारध्वनिषट्पदी ।
संहारदानादानादि-
　　शक्तियुक्ता यतो रलौ ॥१३२॥
एकत्वेन स्मरन्तीति
　　शंभुनाथो निरूचिवान् ।

या नाम पूर्णप्रकाशात्मनः शब्दराशेर्भगवतो बहिरौन्मुख्याभावादान्तरी प्रमात्रैकात्म्यमापन्ना शक्तिः, सा तत्तद्भेदप्रथात्मनोऽनुच्छूनतया भविष्यत्त्वात् मातृतुल्येत्यसौ इवार्थे कनो विधानात् मातृका उदिता तच्छब्दव्यपदेश्येत्यर्थः। माल्यते धार्यते रुद्रैरात्मतया स्वीक्रियते, मलते भुक्तिमुक्तिस्वरूपे धत्ते इति कर्मणि कर्तरि च 'मल मल्ल धारणे' इत्यस्य, तत्तद्भश्यादिफलनिमित्तं संजातमाला, मालाशब्दस्य पुष्प-

मालायां रूढस्य अवयवे समुदायोपचारेण पुष्प-वाचित्वात्पुष्पिणीत्यर्थः। अनयैव व्युत्पत्त्या पूजो-पकरणभूता माला विद्यते यस्याः, सा पूज्येति माशब्दध्वननीयस्य संहारस्य अलिनी विम-र्शिका, माशब्दवाच्यं संहारं राति लाति वा त-च्छीला 'रा दाने' 'ला आदाने' इत्यनयोः ॥

ननु अनयोः पञ्चाशतोऽपि वर्णानामविशेषा-त्कोऽयं भेदो नाम इत्याशङ्क्य आह

शब्दराशिर्मालिनी च
शिवशक्त्यात्मकं त्विदम् ॥ १३३
एकैकत्रापि पूर्णत्वा-
च्छिवशक्तिस्वभावता ।

तुर्ह्यर्थे। ननु यदि एवं। तत् कथं
'वाचकत्वेन सर्वापि शंभोः शक्तिश्च शस्यते।' (मा०वि० ३।१२)
इत्यादि उक्तमित्याशङ्क्य आह एकैकत्रापीत्यादि किंतु मालिन्यां शाक्तस्य स्वभावस्योद्रेको येनोक्तं

'परमार्थतः सा शाक्ती तनुः'

इति

'कां कां सिद्धिं न वितरेत्किं वा न्यूनं न पूरयेत्'

इति च ॥

अत एव सर्वमन्त्रारणिस्वभावया मन्त्रान्तराणामपि उद्दीपनं क्रियते इत्याह

तेन भ्रष्टे विधौ वीर्ये
स्वरूपे वानया परम् ॥ १३४ ॥
मन्त्रा न्यस्ताः पुनर्न्यासा-
त्पूर्यन्ते तत्फलप्रदाः ।

तेन शक्त्यात्मत्वेन हेतुना निजनिजतन्त्रप्रसिद्धविद्याभ्रंशेऽपि तन्त्रान्तरीया मन्त्रा न्यस्ताः सकलमन्त्रतेजःसंदीपिकया अनया मालिन्या भगवत्या पुनर्न्यासात् तत्तत्फलप्रदाः परं पूर्यन्ते स्वाम्नायाम्नातफलदानोन्मुखाः संपाद्यन्ते इत्यर्थः ॥

नच अस्मदुपज्ञमेव एतदित्याह

उक्तं श्रीपूर्वतन्त्रे च
विशेषविधिहीनिते ॥ १३५ ॥
न्यस्येच्छाक्तशरीरार्थे
भिन्नयोनिं तु मालिनीम् ।
विशेषणमिदं हेतौ
हेत्वर्थश्च निरूपितः ॥ १३६ ॥

यथेष्टफलसिद्ध्यै चे-
त्यत्रैवेदमभाषत ।

तदुक्तं तत्र

'यथेष्टफलसंसिध्यै मन्त्रतन्त्रानुवर्तिनाम् ।
विशेषविधिहीनेषु न्यासकर्मसु मन्त्रवित् ॥
न्यस्येच्छाक्तशरीरार्थं भिन्नयोनिं तु मालिनीम् । (३।५)

इति । इदमिति विशेषविधिहीनत्वलक्षणम् । निरूपित इति श्रष्टे विधावित्यादिना । न केवलमेतदेव अत्र उक्तं, यावदन्यदपीत्याह यथेत्यादि । इदमिति वक्ष्यमाणम् ॥

तदेव आह

साञ्जना अपि ये मन्त्रा
गारुडाद्या न ते परम् ॥ १३७ ॥
मालिन्या पूरिताः सिध्यै
बलादेव तु मुक्तये ।
तस्मात्फलेप्सुरप्यन्य
मन्त्रं न्यस्यात्र मालिनीम् १३८
न्यस्येज्जप्त्वापिच जपे-
दयत्नादपवृक्तये ।

पूरिता इति पुनर्न्यासात् ॥

एवं प्रसङ्गापतितं मालिन्या वीर्यातिशयं निरूप्य प्रकृतमेव आह

इत्येवं मातृकां न्यस्ये-
न्मालिनीं वा क्रमाद्वयम् १३९

सिद्धिमुक्त्यनुसाराद्वा
वर्णान्वा युगपद्द्वयोः ।

अक्षह्रीं नफह्रीमेतौ
पिण्डौ संघाविहानयोः ॥१४०

वाचकौ न्यास एताभ्यां
कृते न्यासेऽथवैकक: ।

एष चाङ्गतनुब्रह्म-
युक्तो वा तद्विपर्ययः ॥१४१॥

सामुदायिकविन्यासे
पृथक् पिण्डाविमौ क्रमात् ।

अक्रमादथवा न्यस्ये-
देकमेवाथ योजयेत् ॥१४२॥

सिद्धिमुक्त्यनुसारादिति सृष्टिसंहारक्रमेण। युगपदिति अनक्षफेत्यादिरूपतया। संघाविति प्रत्याहारयुक्त्या गर्भीकृतनिखिलवर्णत्वात्। कृते न्यासे इति मन्त्रान्तरैः। एकक इति मन्त्रान्तरन्यासपरिहारात्। एष इति मालिन्यादिन्यासः। तनुर्मूर्तिः, अङ्गादि च अत्र श्रीसिद्धातन्त्राद्युक्तम्। तद्विपर्ययो वेति अङ्गाद्ययोगात्। सामुदायिकेति मातृकामालिनीमेलनेन। पृथगिति नतु वर्णवत् मिश्रीकरणेन ॥ १४२ ॥

ननु किमेवं क्रियाडम्बरेणेत्याशङ्क्य आह

क्रियया सिद्धिकामो यः
स क्रियां भूयसीं चरेत्।
अनीप्सुरपि यस्तस्मै
भूयसे स्वफलाय सा ॥१४३॥

यस्तु ध्यानजपाभ्यासैः
सिद्धीप्सुः स क्रियां परम्।
संस्कृत्यै स्वेच्छया कुर्यात्
प्राड्न्येनाथ भूयसीम् ॥१४४

मुमुक्षुरथ तस्मै वा
यथाभीष्टं समाचरेत् ।
शिवतापत्तिरेवार्थो
ह्येषां न्यासादिकर्मणाम् १४५

अत्र द्वितीयार्धं हेतुः । अनीप्सुरिति फलमात्राकांक्षित्वात् । तस्मायिति भूयसे फलाय । यः पुनर्ध्यानादिना सिद्धिमाप्तुमिच्छुः, स ज्ञानित्वादेव कामचारेण संक्षिप्तां भूयसीं वा क्रियां परं संस्कृत्यै योग्यताधानाय कुर्यात् । यद्वा समनन्तरोक्तरीत्या भूयसीमेव क्रियां कुर्यात् येन परं संस्कृतत्वमेव स्यात् । अथशब्दः पक्षान्तरसमुच्चये, तेन मुमुक्षुरपि संस्कारार्थं स्वेच्छया क्रियां कुर्यात्, यद्वा संस्कृतेरपि मोक्षपर्यवसायित्वात् तस्मै मोक्षायैव संक्षेपविस्ताराभ्यां यथाभीष्टं समाचरेत् यत एषां तथा क्रियमाणानां न्यासादिकर्मणां शिवतापत्तिरेव अर्थः पार्यन्तिकं फलमित्यर्थः ॥ १४५ ॥

एतदुपसंहृत्य अर्घपात्रविधिमभिधत्ते

एवं न्यासं विधायार्घ-
पात्रे विधिमुपाचरेत् ।
उक्तनीत्यैव तत्पश्चात्
पूजयेन्न्यस्तवाचकैः ॥१४६॥

तदेव आह

यतः समस्तभावानां
शिवात्सिद्धिमयादथो ।
पूर्णादव्यतिरेकित्वं
कारकाणामिहार्चया ॥१४७॥

सिद्धिमयादिति पूर्णादिति च बुभुक्षुमुमुक्षु-विषयतया उक्तम् ॥ १४७ ॥

ननु तदेव नियतानां यष्ट्रादीनां शिवाव्यतिरेकभावनेन कोऽर्थः, उत्तरकालं हि सर्वत्र तद्व्यतिरेकेणैव प्रतिभास इत्याशङ्क्य आह

समस्तं कारकव्रातं
शिवाभिन्नं प्रदर्शितम् ।
पूजोदाहरणे सर्वं
व्यश्नुते गमनाद्यपि ॥१४८॥

पूजोदाहृतौ हि निखिलं कारकव्रातं शिवाभिन्नं प्रदर्शितम् । तत् सर्वं लौकिकमपि गमनादि व्यश्नुते तत्रापि शिवाभिन्नतयैव व्याप्तिं कुर्यादित्यर्थः ॥ १४८ ॥

ननु यजिक्रियायां कारकाणामेवमभ्यस्यमानः शिवाव्यतिरेकः कथं लौकिक्यां गमनादिक्रियायामपि स्यादित्याशङ्कां दृष्टान्तप्रदर्शनेन उपशमयितुमाह

यथाहि वाहकटक-
भ्रमस्वातन्त्र्यमागतः ।
अश्वः संग्रामरूढोऽपि
तां शिक्षां नातिवर्तते ॥१४९

ननु एवं किं स्यादित्याशङ्क्य आह

तथार्चनक्रियाभ्यास-
शिवीभावितकारकः ।
गच्छंस्तिष्ठन्नपि द्वैतं
कारकाणां व्यपोज्झति ॥१५०

तथैक्याभ्यासनिष्ठस्या-
क्रमाद्विश्वमिदं हठात् ।
संपूर्णशिवताक्षोभ-
नर्तीनर्तदिव स्फुरेत् ॥१५१॥

यद्गुरवोऽपीत्याह

उवाच पूजनस्तोत्रे
ह्यस्माकं परमो गुरुः ।
अहो स्वादुरसः कोऽपि
शिवपूजामयोत्सवः ॥१५२॥
षट्त्रिंशतोऽपि तत्त्वानां
क्षोभो यत्रोल्लसत्यलम् ।

क्षोभ इति संपूर्णतालक्षणः ॥

अतश्च एवमनुशीलयतां शिवतावेशादन्यत् फलं नास्तीत्याह

तदेतादृक्पूर्णशिव-
विश्वावेशाय येऽर्चनम् ॥१५३
कुर्वन्ति ते शिवा एव
तान्पूर्णान्प्रति किं फलम् ।

ननु क्रियामात्रादेव कथमेवं स्यादित्याशङ्क्य आह

विनापि ज्ञानयोगाभ्यां
　क्रिया न्यासार्चनादिका १५४
इत्थमैक्यसमापत्ति-
　दानात्परफलप्रदा ।

इत्थमिति शिवीभावापत्तिभावनाक्रमेण ॥

न केवलमियं मुमुक्षोरेव अभीष्टं फलं प्रददाति, यावत् बुभुक्षोरपीत्याह

साधकस्यापि तत्सिद्धि-
　प्रदमन्त्रैकतां गतम् ॥१५५॥
विश्वं व्रजदविघ्नत्वं
　स्वां सिद्धिं शीघ्रमावहेत् ।

व्रजदविघ्नत्वमिति सर्वस्य संविदेकरूपत्वात् ॥

एतां दशामधिरूढस्य हि किंचिदपि साधनं नोपादेयम् । तदागम इत्याह

उक्तं च परमेशेन
　न विधिर्नार्चनक्रमः ॥१५६॥

केवलं स्मरणात्सिद्धि-
वाञ्छितेति मतादिषु ।
मतादिषु इति श्रीसिद्धामतादौ ॥
प्रकृतमेव उपसंहरति
तदेवं तन्मयीभाव-
दायिन्यर्चाक्रिया यतः ॥१५७
समस्तकारकैकात्म्यं
तेनास्याः परमं वपुः ।
तेनेति तन्मयीभावदायित्वेन ॥
तदैकात्म्यमेव विभजति
यष्ट्राधारस्य तादात्म्यं
स्थानशुद्धिविधिक्रमात् १५८
यष्टृयाज्यतदाधार-
करणादानसंप्रदाः ।
न्यासक्रमेण शिवता-
तादात्म्यमधिशेरते ॥१५९॥
स्थानशुद्धिर्विघ्नोत्सारणादिना ॥ १५९ ॥

ननु यष्टा तावत् कर्ता अभिधीयते, याज्यं च 'देवतोद्देशेन द्रव्यत्यागो यागः' इत्याद्युक्तेरिज्यते देवतायै त्यज्यते इति पुष्पादिद्रव्यं कर्म, तयोः कर्तृकर्मणोराधारश्च यागवेश्म व्यक्ताव्यक्तादि च, संप्रदा च 'यागः प्रदानं देवता' इत्यादि-नीत्या देवतात्म संप्रदानम् । आदानं करणं वा पुनः किमुच्यते इत्याशङ्क्य आह

अर्घपात्रमपादानं
तस्मादादीयते यतः ।
यच्च तत्स्थं जलाद्येत-
त्करणं शोधनेऽर्चने ॥१६०॥

जलादीति आदिशब्दात् सुरादि, अनेन च द्रव्याणां योग्यत्वं निरूपयितुं प्रक्रान्तम् ॥

ननु कथं तत्स्थेनैव जलादिना शोधनं स्यादित्याशङ्क्य आह

अर्घपात्राम्बुविप्रुड्भिः
स्पृष्टं सर्वं हि शुध्यति ।

शिवार्ककरसंस्पर्शा-
त्कान्या शुद्धिर्भविष्यति १६१

नच एतन्न्यायत एव सिद्धमित्याह

ऊचे श्रीपूर्वशास्त्रे त-
दर्घपात्रविधौ विभुः ।

तदेव आह

न चासंशोधितं वस्तु
किंचिदप्युपकल्पयेत् ॥१६२॥
तेन शुद्धं तु सर्वं य-
दशुद्धमपि तच्छुचि ।

ननु नीलादिवत् प्रतिभासविकारकारित्वा-भावात् न शुद्ध्यशुद्धी नाम कश्चित् भावधर्म इत्युक्तं प्राग्बहुशः, तदशुद्धतैव का यदपसारणे-नापि शुद्धता स्यादित्याशङ्क्य आह

अशुद्धता च विज्ञेया
पशुतच्छासनाशयात् ॥१६३॥

ननु कथं पराभिप्रायेण परस्य एवंरूपत्वं स्यादित्याशङ्क्य आह

स्वतादवस्थ्यात्पूर्वस्मा-
दथवाप्युपकल्पितात् ।

भावानां हि पूर्वस्मादशुद्धादर्घपात्राम्बुविप्रुडादिना कल्पितात् शुद्धाद्वा रूपात् स्वस्य आत्मनस्तादवस्थ्यमुभयथापि अविशेष एवेत्यर्थः ॥

ननु यदि नाम शुद्धावशुद्धौ वा भावानामविशिष्टमेव रूपं, तत् कुतस्तद्विभागोऽवसीयते इत्याशङ्क्य आह

तेन यद्यदिहासन्नं
संविदश्चिदनुग्रहात् ॥१६४॥
कियतोऽपि तदत्यन्तं
योग्यं यागेऽत्र जीववत् ।

कियत इति अल्पकात् ॥

एवं संविदोऽपि दूरमशुद्धमित्याह

अनेन नययोगेन
यदासत्तिविदूरते ॥ १६५ ॥

संविदेति तदा तत्र
योग्यायोग्यत्वमादिशेत् ।

एवं च

'स्वदेहावस्थितं द्रव्यं रसायनवरं शुभम् ।'

इत्याद्युक्त्या संविदासन्नत्वात् सारादिशब्द-व्यपदेश्यममृतं यागयोग्यतया गुरूणामभिम-तमित्याह

वीराणामत एवेह
मिथःस्वप्रतिमामृतम् ॥१६६॥
तत्तद्यागविधाविष्टं
गुरुभिर्भावितात्मभिः ।

मिथःस्वप्रतिमामृतमिति मिथः परस्परस्य संयुक्ततया आत्मीयायाः षडरमुद्रारूपायाः प्रतिमायाः संबन्धि अमृतमुभयसामरस्यस-मुत्थः कुण्डगोलकाख्यो द्रव्यविशेष इत्यर्थः । अत्र च वीराणामिति भावितात्मभिरिति चानेन विशिष्टाधिकारिविषयत्वमुक्तम् ॥

एवं संविदुद्रेचकमेव वस्तु अर्चने योग्यमित्याह

उन्मज्जयति निर्मग्नां
संविदं यत्तु सुष्ठु तत् १६७
अर्चायै योग्यमानन्दो
यस्मादुन्मग्नता चितः ।

अतश्च इदं सिद्धमित्याह

तेनाचिद्रूपदेहादि-
प्राधान्यविनिमज्जकम् ॥१६८
आनन्दजननं पूजा-
योग्यं हृदयहारि यत् ।

यदभिप्रायेणैव

'या या संविदुदारा यो योऽप्यानन्दसुन्दरो भावः ।
जगति यदद्भुतरूपं तत्तद्देव्यास्तवाकारः ॥'

इत्यादि अन्यैरुक्तम् ॥

अत एव आनन्दातिशयकारिणो मद्यादेरेव सर्वशास्त्रेषु परं माहात्म्यमुक्तमित्याह

अतः कुलक्रमोत्तीर्ण-
त्रिकसारमतादिषु ॥ १६९ ॥

मद्यकादम्बरीशीधु-
द्रव्यादेर्महिमा परम् ।

आदिशब्देन मांसमैथुनादि । तदुक्तं

'न नद्यो मधुवाहिन्यो न पलं पर्वतोपमम् ।
स्त्रीमयं न जगत्सर्वं कुतः सिद्धिः कुलागमे ॥'

इति ॥

ननु यदि एवं तत् कथं श्रुतिस्मृत्यादौ मद्यादेरशुद्धत्वमुक्तमित्याह

लोकस्थितिं रचयितुं
मद्यादेः पशुशासने ॥१७०॥
प्रोक्ता ह्यशुद्धिस्तत्रैव
तस्य क्वापि विशुद्धता ।

ननु लोकस्थितिमेव रचयितुं मद्यादेरत्र अशुद्धिरुक्ता न तत्त्वत इत्येव कुत इत्याशङ्क्य उक्तं तत्रैव तस्य क्वापि विशुद्धतेति । क्वापीति सौत्रामण्याम् ॥

न केवलं मद्यादेर्लोकस्थितावशुद्धस्यापि शुद्धिरुक्ता, यावदन्यदप्येवंप्रकारं बहुतरमित्याह

पञ्चगव्ये पवित्रत्वं
　　सोमचर्णनपात्रयोः ॥१७१॥
विधिश्चावभृथस्नानं
　　हस्ते कृष्णविषाणिता ।
न पत्न्या च विना यागः
　　सर्वदैवततुल्यता ॥ १७२ ॥
सुराहुतिर्ब्रह्मसत्रे
　　वपान्त्रहृदयाहुतिः ।

चर्णनमभिषवः । कृष्णविषाणितेति कृष्णस्य कृष्णसारस्य विषाणं कण्डूयनादौ विनियुक्तमस्यास्तीति । सर्वदैवततुल्यतेति शाब्दी हि देवता वेदवादिनां, न तत्र विशेषः श्रूयते इति । यत् श्रुतिः

'कृष्णविषाणया कण्डूयतीति, पत्नीयजमानावादधीयातामिति, सुराग्रहाञ्जुहतीति, ब्राह्मणो ब्राह्मणमालभेतेति, वपया प्रातःसवेन चरन्तीति, हृदयस्याग्रेऽवद्यतीति च ॥'

ननु मायापदनिरूढेषु पाशवेषु शास्त्रेषु अद्व्यनयोचितं कथमेवं स्यादित्याशङ्क्य आह

पाशवेष्वपि शास्त्रेषु
तद्दर्शि महेशिना ॥१७३॥
घोरान्ध्यहैमननिशा-
मध्यगाचिरदीप्तिवत् ।

ननु पाशवे शासने शुद्ध्यशुद्ध्योर्विभाग उक्तः, इह तु तदविभाग इति किमनयोः कल्पयोर्युज्येतेत्याशङ्क्य आह

भक्ष्यो हंसो न भक्ष्योऽसा-
विति विप्रतिपत्तिषु ॥१७४॥
स्मार्तीषु विजयत्येको
यः शिवाभेदशुद्धिकः ।

भक्ष्य इति । यत् श्रुतिः

'हंसो वृको वृषदंशस्ते ऐन्द्राः ।'

इति । अभक्ष्य इति यत्स्मृतिः

'कलविङ्कं प्लवं हंसं चक्राह्वं ग्रामकुक्कुटम् ।'

इति अभक्ष्यप्रकरणे । विप्रतिपत्तिष्विति श्रुतेः ॥

तद्विजये निमित्तमाह

अज्ञत्ववेदादर्शित्व-
　　रागद्वेषादयो ह्यमी ॥ १७५ ॥
मुनीनां वचसि स्वस्मि-
　　न्प्रामाण्योन्मूलनक्षमाः ।

ननु किं नाम एषामज्ञत्वादि यत् स्ववचःप्रामाण्योन्मूलनायामपि क्षमते इत्याशङ्क्य आह

वेदेऽपि यदभक्ष्यं त-
　　द्भक्ष्यमित्युपदिश्यते ॥१७६॥

वेदेऽपि हि प्रदर्शितदृशा स्मृत्यादिनिषिध्यमानं हंसादि भक्ष्यतया श्रूयते इत्येषां वेदादर्शित्वं तदज्ञानं तन्नान्तरीयकं रागादि चेति अप्रमाणमेव तद्वचः ॥ १७६ ॥

ननु एवमपि भक्ष्यत्वाभक्ष्यत्वयोः समुच्चयविकल्पौ स्यातामित्याशङ्क्य आह

न विधिप्रतिषेधाख्य-
　　धर्मयोरेकमास्पदम् ।

अथ अश्वमेधादावेव राजन्यादिनैव तद्भक्ष्यमन्यथा तु अभक्ष्यमित्युच्यते, तर्हि विषयभेदेन

व्यवस्थायां शुद्ध्यशुद्धिविभागो न दुष्यतीत्याह

अथ तत्र न तद्भक्ष्यं
तदा तेन तथा ततः ॥१७७॥
एवं विषयभेदान्नो
शिवोक्तेर्बाधिका श्रुतिः।

तत्रेति अश्वमेधादन्यत्र । तथेति भक्ष्यम् । तत इति श्रुतेः ॥

ननु मा भूद्विषयभेदे शिवोक्तेः श्रुतिर्बाधिका समाने तु विषये को बाधविरोध इत्याशङ्क्य आह

क्वचिद्विषयतुल्यत्वा-
द्वाध्यबाधकता यदि ॥१७८॥
तद्वाध्या श्रुतिरेवेति
प्रागेवैतन्निरूपितम् ।

प्रागिति चतुर्थाह्निके । यदुक्तं तत्र

'वैदिक्या बाधितेयं चेद्विपरीतं न किं भवेत् ।
सम्यक्चेन्मन्यसे बाधो विशिष्टविषयत्वतः ॥
अपवादे न कर्तव्यः सामान्यविहिते विधौ ।
शुध्यशुद्धी च सामान्यविहिते तत्त्वबोधिनि ॥
पुंसि ते बाधिते एव तथा चात्रेति वर्णितम् ।(२३२)

इति ॥

प्रकृतं ब्रूमहे कृत्वा
न्यासं देहार्घपात्रयोः ॥१७९॥
सामान्यमर्घपात्राम्भो-
विप्रुड्भिः प्रोक्ष्य चाखिलम् ।
यागोपकरणं पश्चा-
द्बाह्ययागं समाचरेत् ॥१८०॥

प्रकृतमिति प्रक्रान्तं बाह्ययागादि । सामान्यमिति विशिष्टस्य वक्ष्यमाणत्वात् । बाह्ययागमिति बहिरर्चेत्यनुजोद्देशोद्दिष्टम् ॥ १८० ॥

तदेव आह

प्रभामण्डलके खे वा
सुलिप्तायां च वा भुवि ।
त्रिशूलार्कवृषान्दिक्स्था
मातरः क्षेत्रपं यजेत् ॥१८१॥
योगिनीश्च पृथङ्मन्त्रै-
र्नमोनामयोजितैः ।

एकोच्चारेण वा बाह्य-
परिवारेतिशब्दिताः ॥१८२॥
तारो नाम चतुर्थ्यन्तं
नमश्चेत्यर्चने मनुः ।

प्रभामण्डले इति आयतनादौ । खे इति स्व-देहादौ । भुवीति स्थण्डिलादौ । एकोच्चारेणेति संक्षिप्तदीक्षादौ ॥

बाह्ययागमुपसंहरंस्तदनन्तरोद्दिष्टं द्वारान्तरमभिधत्ते

एवं बहिः पूजयित्वा
द्वारं प्रोक्ष्य प्रपूजयेत् ॥१८३॥
त्रिशिरःशासनादौ च
स दृष्टो विधिरुच्यते ।
गणेशलक्ष्म्यौ द्वारोर्ध्वे
दक्षे वामे तयोः पुनः ॥१८४॥
मध्ये वागीश्वरीं दिण्डि-
महोदरयुगं तथा ।

क्रमात्स्वदक्षवामस्थं
　　तथैतेन क्रमेण च ॥ १८५॥

एकैकं पूजयेत्सम्यङ्
　　नन्दिकालौ त्रिमार्गगाम् ।

कालिन्दीं छागमेषास्यौ
　　स्वदक्षाद्द्वाःस्थशाखयोः १८६

अधोदेहल्यनन्तेशा-
　　धारशक्तीश्च पूजयेत् ।

द्वारमध्ये सरस्वत्या
　　महास्त्रं पूजयेदमी ॥ १८७॥

पञ्चाधारगताः सर्वेऽ-
　　प्युदिता विघ्ननाशकाः ।

पूजने पूर्ववन्मन्त्रो
　　दीपकद्वयकल्पितः ॥ १८८॥

अर्घपुष्पसमालम्भ-
　　धूपनैवेद्यवन्दनैः ।

पूजां कुर्यादिहार्घश्चा-
प्युत्तमद्रव्ययोजितः ॥१८९॥
एकोच्चारेण वा कुर्याद्-
द्वाःस्थदैवतपूजनम् ।
रहस्यपूजां चेत्कुर्या-
त्तद्बाह्यपरिवारकम् ॥ १९० ॥
द्वाःस्थांश्च पूजयेदन्त-
र्दैवाग्रे कल्पनाक्रमात् ।
क्षिप्त्वास्त्रजप्तं कुसुमं
ज्वलद्वेश्मनि विघ्नुत्॥१९१॥
प्रविश्य शिवरश्मीद्ध-
दृशा वेश्मावलोकयेत् ।
दिशोऽस्त्रेण च बध्नीया-
च्छादयेद्वर्मणाखिलाः॥१९२॥
तत्रोत्तराशाभिमुखो
मुमुक्षुस्तादृशाय वा ।

विशेत्तथा ह्यघोराग्निः
पाशाल्लुँष्याति बन्धकान् १९३

स विधिरिति द्वारपूजालक्षणः, तमेवाह ग-णेशेत्यादि । तदुक्तं तत्र

'संपूज्य द्वार ऊर्ध्वे तु गणेशं दक्षिणे तथा ।
वामे श्रियं च वागीशीं मध्ये संचिन्त्य पूजयेत् ॥'

इति । स्वेति साधकाभिप्रायेण। एतेनेति दक्ष-वामात्मनैव, द्वाराभिप्रायेण पुनरत्र विपर्ययः । तदुक्तं तत्र

'ततो मूले उत्तरतो नन्दिरुद्रं च जाह्नवीम् ।
महाकालं सदंष्ट्रं च यमुनां चैव दक्षिणे ॥'

इति । अध इति अधरोडम्बरे । द्वारमध्ये इति ऊर्ध्वोडम्बरे । उत्तमद्रव्ययोजित इति नतु अष्ट-भिरङ्गैः। एकोच्चारेणेति ओं सर्वद्वारपालेभ्यो नमः इति । कल्पनाक्रमादिति नतु तन्त्रप्रक्रियावत्सा-क्षात् । क्षिप्त्वेति अर्थात् नाराचमुद्रया । शिवर-श्मीद्धदृक्त्वं परवृत्त्यवलम्बनात्। अवलोकयेदिति गुणाधानाय, पुनःप्रवेशरोधाय दिशो बध्नीयात् छादयेच्चेति उक्तम्। तादृशायेति मुमुक्षवे अर्थात्

दीक्षाकाले, बुभुक्षुविषयं पुनरेतदन्यथेति अर्थसिद्धम् । यदुक्तं

'पूर्वास्यः सौम्यवक्त्रो वा........ ।' (मा०वि०८।१८)

इति ॥ १९३ ॥

ननु अस्मिन् संविदद्वयवादे दिगेव नाम का यस्या अपि उत्तरादिविभागो भवेदित्याशङ्क्य आह

यद्यप्यस्ति न दिङ्नाम
काचित्पूर्वापरादिका ।
प्रत्ययो हि न तस्याः स्या-
देकस्या अनुपाहितेः ॥१९४॥

अनेन च प्रवेशानन्तर्येण दिक्स्वरूपमुपक्रान्तम् । ननु उक्तमेव हि काणादैः

'केवलवृक्षादिप्रत्ययविलक्षणपूर्वादिप्रत्ययानुमेया दिगस्ति ।'

इति । सा च एका सर्वत्र तत्प्रत्ययाविशेषात् । ननु यद्येवं, तत् कथमनुपाहितरूपाया एकस्यास्तस्याः पूर्वापरादिको भेदो भवेदित्याह पूर्वेत्यादि ॥ १९४ ॥

अथ उपाधिरेव तादृक् कश्चिदस्तु यः पूर्वादि-

व्यवहार्य इत्युच्यते, तदुपाधिसंज्ञितं वस्त्वन्तर-
मेव तथा स्यात् न दिङ् नाम पूर्वादिप्रत्यय-
पात्रतामनुभवेदित्याह

उपाधिः पूर्वतादिष्ट
इति चेत्तत्कृतं दिशा ।

एवमपि अस्मत्समीहितस्य पूर्वादिव्यवहा-
रस्य सिद्धेरस्तु एतदिति चेत्, नेत्याह

उपाधिमात्रं तु तथा
वैचित्र्याय कथं भवेत् ॥१९५॥

तथेति दिक्पौर्वापर्याद्यात्मना ॥ १९५ ॥

ननु तर्हि भावस्वभावाधिकदिक्कालापह्नव-
वादिभिः सौगतैरेव जितमित्याह

तस्मात्संवित्प्रकाशोऽयं
मूर्त्याभासनभागतः ।
पूर्वादिदिग्विभागाख्य-
वैचित्र्योल्लेखदुर्मदः ॥१९६॥

एतदेव उत्तरमवरोहक्रमेण विभज्य दर्शयति

तत्र यद्यत्प्रकाशेन
सदा स्वीकरणे क्षमम् ।
तदेवोर्ध्वं प्रकाशात्म
स्पर्शायोग्यमधः पुनः ॥१९७॥
किंचित्प्रकाशता मध्यं
ततो वै दिक्समुद्भवः ।
किंचित्प्रकाशयोग्यस्य
संमुखं प्रसरत्पुरः ॥१९८॥
पराङ्मुखं तु तत्पश्चा-
दिति दिग्द्वयमागतम् ।
प्रकाशः संमुखं वस्तु
गृहीत्वोद्रिक्तरश्मिकः ॥१९९॥
यत्र तिष्ठेद्दक्षिणं त-
त्प्रकाशस्यानुकूल्यतः ।
दक्षिणस्य पुरःसंस्थं
वाममित्युपदिश्यते ॥२००॥

तत्प्रकाशितमेयेन्दु-
स्पर्शसौम्यं तदेव हि ।

इह खलु परप्रकाशवपुषः परमेश्वरस्यापि

'स यदास्ते चिदाह्लादमात्रानुभवतल्लयः ।
तदेच्छा तावती तावज्ज्ञानं तावत्क्रिया हि सा ॥'
( शि० दृ० १ । ३ )

इत्यादिनीत्या परापरतदुभयदशावेशभाजः परांशे विश्वस्य प्रकाशैकमयत्वादूर्ध्वत्वम्, अपरांशे प्रकाशस्पर्शायोग्यत्वादधस्त्वम्, तदुभयांशे कथंचित्प्रकाशाप्रकाशसंस्पर्शात् दशान्तरालतया मध्यत्वं यत एव दिशां समुद्भव इति। तत्र किंचित्प्रकाशौन्मुख्ययोग्यतया प्रस्फुरत् विश्वं पुरः प्रमुखे अञ्चतीति प्राचीत्युच्यते, किंचिदप्रकाशसंस्पर्शात्तु तदेव विमुखमिव पराञ्चतीति पश्चादिति चेति तावदनपह्नवनीयं दिग्द्वयम् । स एव किंचित्प्रकाशः स्वसंस्पृष्टं विश्वमवमृश्य यस्मिन्नात्मनि स्वप्रकाशमये पारिपूर्ण्योचिते वर्तते, सैव प्रकाशानुगुण्याद्दक्षिणा दिगिति; किंचिदप्रकाशः पुनः कथंचिदुद्रिक्तः तथाविधप्रकाशांशसमस्कन्धतया तदादिष्ट इव मेयप्रा-

धान्यादैन्दवसंस्पर्शाप्यायिततया प्रकाशप्राति-
कूल्यवमनात् वामाभिधानभाजनम् ॥

ननु एवमौत्तराधर्ययोगात् मध्यविभागाच्च परशिवपदे, तदौचित्याच्च उत्तरदशास्वपि षडेव दिशः स्युरित्याशङ्क्य आह

एवमाशाचतुष्केऽस्मि-
न्मध्यविश्रान्तियोगतः॥२०१॥
चतुष्कमन्यत्तेनाष्टौ
दिशस्तत्तदधिष्ठिताः ।

चतुष्कमन्यदिति पूर्वदक्षिणदक्षिणापरापरोत्तरोत्तरपूर्वलक्षणम् । तत्तदधिष्ठिता इति तेन तेन संमुखपराङ्मुखोद्रिक्तानुद्रिक्तप्रकाशाप्रकाशांशेन अधिष्ठिताः स्वात्मनि विश्रान्तिसारतया अवमृष्टा इत्यर्थः ॥

अमुष्यैव दिग्विभागस्य शास्त्रलोकप्रसिद्धस्तद्विभागः प्रपञ्च इत्युपसंहारदिशा प्रदर्शयति

एवं प्रकाशमात्रेऽस्मि-
न्वरदे परमे शिवे ॥ २०२ ॥

दिग्विभागः स्थितो लोके
शास्त्रेऽपिच तथोच्यते ।

तदेवमयं दिग्विभागोऽस्मिन्प्रकाशैकरूपे परानुग्रहपरे परमेश्वरे

' स्वामिनश्चात्मसंस्थस्य भावजातस्य भासनम् ।
अस्त्येव न विना तस्मादिच्छामर्शः प्रवर्तते ॥(ई०प्र०१।५।१०)

इत्याद्युक्तयुक्त्या स्वात्ममयतया स्थितः सन् शास्त्रे लोके च तथोच्यते तावत्पर्यन्तमूर्ध्वादिशब्दव्यपदेशपात्रतया प्रस्फुरित इत्यर्थः ॥

तत्र शास्त्रीयं दिग्विभागमाह

क्रमात्सदाशिवाधीशः
पञ्चमन्त्रतनुर्यतः ॥ २०३॥
ईशतत्पुरुषाघोरवामाख्य-
सद्योऽधोभेदतो दिशः ।

शिवशक्तिदशानन्तरं भगवान् पञ्चमन्त्रतनुः सदाशिवनाथो भवति यस्मादीशतत्पुरुषादिवक्त्रभेदतः षोढा दिशः समुल्लसन्तीति वाक्यार्थः ॥

एतदेव विभजति

ईश ऊर्ध्वं प्रकाशत्वा-
त्पूर्वं वक्त्रं प्रसारि यत्॥२०४॥
पुरुषो दक्षिणाचण्डो
वामा वामस्तु सौम्यकः ।
पराङ्मुखतया सद्यः
पश्चिमा परिभाष्यते॥२०५॥
पातालवक्त्रमधर-
मप्रकाशतया स्थितेः ।

यत् यस्मादीशः प्रकाशैकरूपत्वादूर्ध्वा दिगुच्यते, तत्पुरुषः प्रकाशौन्मुख्येन प्रसरणात् पूर्वा, अघोरः प्रसृतप्रकाशोद्रेकानुकूल्याद्दक्षिणा, वामदेवस्तत्प्रातिकूल्यात् मेयेन्दुसंस्पर्शप्रधाना वामा उत्तरा, सद्योजातः प्रकाशवैमुख्यात् पश्चिमा, पिचुवक्त्रं प्रकाशसंस्पर्शायोग्यत्वादधरा चेति ॥

ननु अत्र भूतव्याप्त्या वक्त्रभेदः समाम्नातः, तत् क इव अयं षोढा तद्विभाग इत्याशङ्क्य आह

खमरुद्वह्निजलभू-
खानि वक्त्राण्यमुष्य हि २०६

मुख्यत्वेन खमेवोर्ध्वं
प्रकाशमयमुच्यते ।
तदेव मुख्यतोऽधस्ता-
दप्रकाशं यतः स्फुटम् ॥२०७॥

तमःप्रकाशाश्रयो हि आकाश इत्याशयः ॥

ननु विरोधिनोः प्रकाशाप्रकाशयोरेकनिषेधे तदितरविधेर्नान्तरीयकत्वात् कोऽवकाशो दिक्चतुष्टयस्येत्याशङ्क्य आह

मध्ये तु यत्प्रकाशं त-
न्न प्रकाश्यं न चेतरत् ।
प्रकाशत्वाद्दिश्यमान-
मतोऽस्मिन्दिक्चतुष्टयम् २०८

मध्ये पुनर्न प्रकाशो, नापि तदभावः, किंतु किंचित्प्रकाशविषयीकृतं प्रकाश्यं तत एव संमुखप्रसरणाद्युपाधिवैचित्र्यात् भेदेन परामृश्यमानमिति स्थित एव अत्र पूर्वादिदिग्विभाग इति ॥ २०८ ॥

प्रकृतमेव उपसंहरति

पञ्चमन्त्रतनुर्नाथ
इत्थं विश्वदिगीश्वरः ।

इत्थमिति वक्त्रव्याप्त्या प्रागुक्तमध्यविश्रान्ति-योग्यतया च ॥

एतदेव कारणान्तरेषु अतिदिशति

ततोऽपीशस्तथा रुद्रो
विष्णुर्ब्रह्मा तथा स्थितः॥२०९

तथेति सादाशिवेन क्रमेण ॥२०९॥

ननु तथेति किं सर्वातिदेश एव, नेत्याह

ऊर्ध्वाभिव्यक्त्ययोग्यत्वा-
द्विष्णोर्धातुश्च पञ्चमम् ।
न वक्त्रं तौ भेदमयौ
सृष्टिस्थितिप्रभू यतः ॥२१०॥

भेदप्रधानतया परसंविदद्वयपरामर्शकौशल-शून्यतयेति आशयः ॥२१०॥

ननु एवं पञ्चवक्त्रायोगे तन्मूलो दिग्विभाग एव न स्यादित्याशङ्क्य आह

दिग्विभागस्तु तज्ज्ञोऽस्ति
वदनानां चतुष्टयात् ।

ऊर्ध्ववक्त्राभावेऽपि तत्समुत्थ ऊर्ध्वाधरात्मा वदनचतुष्टयनान्तरीयकतया दिग्विभेदो विद्यते इति युक्त एव अतिदेशः ॥

ननु वदनचतुष्टयापेक्षयापि दिग्विभागो भवेत्, तदधराधरस्य पूर्वपूर्वत्र अवस्थानादूर्ध्ववक्त्रयोगिनि रुद्रादौ ब्रह्मविष्णवोरपि संभवात् किं तद्वदनचतुष्टयनान्तरीयको दिग्विभागः, उत पञ्चमवक्त्रोदञ्चित इत्याशङ्क्य आह

पञ्चमस्य युजित्वे तौ
परित्यक्तनिजात्मकौ ॥२११॥

परित्यक्तनिजात्मकाविति तदेकलीनावित्यर्थः ॥ २११ ॥

एवं शास्त्रीयं दिग्विभागमभिधाय, लौकिकमपि अभिधत्ते

ततो ब्रह्माण्डमध्येऽपि
ज्ञानशक्तिर्विभो रविः ।

दिशां विभागं कुरुते
प्रकाशघनवृत्तिमान् ॥२१२॥

तदेव दर्शयति

तथाहि विषुवद्योगे
यतः पूर्वं प्रदृश्यते ।
तत्पूर्वं यत्र तच्छाया
तत्पश्चिममुदाहृतम् ॥२१३॥
तस्मिन्निगमिषोरस्य
यत्सव्यं तत्तु दक्षिणम् ।
तत्रैष चण्डतेजोभि-
र्भाति जाज्वल्यमानवत् २१४
तत्पुरोवर्ति वामं तु
तद्भासा खचितं मनाक् ।
तत एव हि सौम्यं त-
न्नचापि ह्यप्रकाशकम् ॥२१५॥
यत्रासावस्तमभ्येति
तत्पश्चिममिति स्थितिः ।

तत्रैव पश्चिमे येषां
प्राक्प्रकाशावलोकनम् २१६
तदेव पूर्वमेतेषां
यथाध्वनि निरूपितम् ।

प्रदृश्यते इति रविः । तस्मिन्निति गमनेच्छाविषये पश्चिमे । तेनापि अत्र गच्छतो यत् सव्यं तत्तेजःसंपत्त्यानुकूल्यात् दक्षिणं तच्छब्दव्यपदेश्यमित्यर्थः । अत एव उक्तं तत्रैष जाज्वल्यमानवद्भाति क्रमात् क्रमं तेजःप्रकर्षातिशयात् अत एव पराशिवदशायामपि

'प्रकाश उद्रिक्तरश्मिको यत्र तिष्ठते ।' (श्लो० ११९)

इत्यादि उक्तम् । तत्पुरोवर्तीति तस्य दक्षिणस्य पुरोवर्ति समस्कन्धतया स्थितमित्यर्थः । तत इति मनाक् तद्भासा खचितत्वात् । तत्रैवेति सूर्यास्तमयस्थाने । येषामिति द्वीपान्तरवासिनाम् । अत एव अन्येषामपि प्राग्भावो यः सुराष्ट्राणां, मालवानां स दक्षिण इति व्यत्ययदर्शनं संमतम् । अध्वनीति भुवनाध्वनि । तदुक्तं तत्र

'सर्वेषामुत्तरो मेरुर्लोकालोकस्तु दक्षिणः ।' (८।११०)
इति ॥

ननु यदि एवं, पश्चिमापि दिक् पूर्वा भवेत् पूर्वापि पश्चिमा । तत्

'आयुष्यं प्राङ्मुखो भुङ्क्ते यशस्यं दक्षिणामुखः ।
श्रेयः प्रत्यङ्मुखो भुङ्क्ते ऋतं भुङ्क्ते पराङ्मुखः ॥'

इत्याद्युक्त्या प्रतिनियतफलप्रदत्वमासां कथं संगच्छते इत्याशङ्क्य आह

सा सा दिक्च तथा तस्य
फलदापि विपर्यये ॥ २१७ ॥
विचित्रे फलसंपत्तिः
प्रकाशाधीनिका यतः ।

एवं पश्चिमपूर्वाद्यात्मनि विचित्रेऽपि विपर्यये सा सा पूर्वापरादिरूपा च दिक् तस्य तत्तद्द्वीपनिवासिनो जनस्य तथा प्रतिनियतत्वेन फलप्रदा यतः प्रकाशमात्राधीनफलसंपत्तिस्तत्स्फारसारा च दिगिति ॥

ननु पर एव प्रकाशो दिग्विभागासूत्रणाय प्रगल्भते इति उक्तं, तत् कथं रविरपि तथा कुर्यादित्याशङ्क्य आह

इत्थं सूर्याश्रया दिक्स्या-
त्सा विचित्रापि तादृशी २१८

अधिष्ठिता महेशेन
चित्रतद्रूपधारिणा ।

इत्थमुक्तेन प्रकारेण सूर्याश्रयापि दिक् संभाव्यते यतः प्रतिनियतरूपत्वाभावात् चित्रा तादृशी सूर्याश्रयापि परसूक्ष्मस्थूलात्मतया चित्रं तासां दिशां रूपं धारयता महेश्वरेण अधिष्ठिता परप्रकाशभित्तिलग्नैवेत्यर्थः ॥

न केवलं विभोर्ज्ञानशक्तिरूपं रविमधिकृत्य दिशः प्रविभज्यन्ते, यावत् संकुचितात्मस्वभावं साधकमपीत्याह

किं वातिबहुना योऽसौ
यष्टा तत्संमुखादितः ॥२१९॥

दिशोऽपि प्रविभज्यन्ते
प्राक्सव्योत्तरपश्चिमाः ।

अत्रापि परमेश्वर एव अधिष्ठातेत्याह

स्वानुसारकृतं तं च
दिग्विभागं सदा शिवः॥२२०॥
अधितिष्ठत्यर्कमिव
स विचित्रवपुर्यतः ।

न केवलमेतत्परमेश्वर एव अधितिष्ठति, यावत् तच्छक्त्यंशरूपः शक्रादिर्लोकपालवर्गोऽपीत्याह

स्वोत्था अपि दिशः स्वेशाः
शक्राद्या ह्यधिशेरते ॥२२१॥
ते हि प्रकाशशक्त्यंशाः
प्रकाशानुविधायिनः ।

न केवलं स्वोत्था एव दिश एवं, यावत् सौर्योऽपीति अपिना कटाक्षितम् ॥

प्रकाशशक्त्यंशत्वमेव एषां दर्शयति

प्रकाशस्य यदैश्वर्यं
स इन्द्रो यत्तु तन्महः॥२२२॥
सोऽग्निर्यन्तृत्वभीमत्वे
यमो रक्षस्तदूनिमा ।

प्रकाश्यं वरुणस्तच्च
　　चाञ्चल्याद्वायुरुच्यते ॥२२३॥
भावसञ्चययोगेन
　　वित्तेशस्तत्क्षये विभुः ।
अदृष्टविग्रहोऽनन्तो
　　ब्रह्मोर्ध्वे बृंहको विभुः॥२२४॥
प्रकाशस्यैव शक्त्यंशा
　　लोकपास्तेन कीर्तिताः ।

'इदि परमैश्वर्ये' इत्यस्य इन्द्र इति। यन्तृत्वं यमयतीतिव्युत्पत्त्या यमः। तदूनिमा इति तस्य प्रकाशस्य प्रकाशोद्रेकादूनिमा गुणीभाव इत्यर्थः। अत एव उक्तं प्रकाश्यं वरुण इति। तदिति प्रकाश्यम्। तत्क्षये इति तस्य भावसंचयस्य क्षये स्वरूपप्राधान्ये इत्यर्थः। अदृष्टविग्रह इति अधोऽवस्थानात्। प्रकाशशक्त्यंशत्वादेव च एषां परानुग्रहकर्तृत्वमित्याह लोकपा इत्यादि ॥

ननु परमशिवात्प्रभृति सदाशिवादिक्रमेण तत्तदाश्रयावलम्बनादनियतरूपा दिगिति उ-

क्तम्, तत् वयं पुनः कतरां तामाश्रयामहे इति न जानीम इत्याशङ्क्य आह

इत्थं स्वाधीनरूपापि
दिक्सौरी तूपदिश्यते॥२२५॥
तत्र सर्वो हि निष्कम्पं
प्रकाशत्वं प्रपद्यते ।

इत्थमुक्तेन प्रकारेण प्रतिनियतत्वाभावात् स्वतन्त्ररूपापि दिक् सौरी एव उपदिश्यते ग्राह्य-तया उच्यते यतः सर्वोऽयं लोकस्तत्र निष्कम्पं प्रकाशत्वं प्रपद्यते दृढं प्रतिपत्तिभाग्भवेदित्यर्थः॥

ननु दिशामिन्द्रादयोऽधिष्ठातार इति उक्तम्। ते च पारमेश्वरैन्द्र्यादिशक्तिस्वभावाः । ताश्च व्यापिका इति कथमासां नियतदिगाधिपत्येन तदुचितफलप्रदत्वं स्यादित्याशङ्कां दृष्टान्तो-पदर्शनेन उपशमयति

सर्वगोऽप्यनिलो यद्व-
द्व्यजनेनोपवीजितः ॥२२६॥
प्रबुद्धः स्वां क्रियां कुर्या-
द्धर्मनिर्णोदनादिकाम् ।

तद्वत्सर्वंगताः सर्वा

ऐन्द्याद्याः शक्तयः स्फुटम् २२७

साधकाश्वाससंबुद्धा-

स्तत्तत्स्वेष्टफलप्रदाः ।

साधकाश्वाससंबुद्धा इति इयमेव पूर्वा दिगित्येवमाद्यात्मना साधकस्य आश्वासेन संबुद्धा नैयत्येन अभिव्यक्ता इत्यर्थः ॥

न केवलमियं सूर्याश्रया दिगैन्द्याद्याभिः पारमेश्वरीभिः शक्तिभिरेव अधिष्ठिता तत्फलप्रदा, यावत् कारणपञ्चकेनापीत्याह

एवं सौरी दिगीशान-

ब्रह्मविष्णवीशसौशिवैः॥ २२८

अधिष्ठिता समाश्वास-

दार्ढ्यात्तत्तत्फलप्रदा ।

ईशानो रुद्रः । ईश ईश्वरः ॥

ननु यष्टापि यत्संमुखः, सा पूर्वा दिगिति उक्तं; तदस्य उत्तराभिमुखत्वं न कदाचिदपि भवेदिति

'उत्तराशाभिमुखो विशेत्' (श्लो० १९३)

इति कथमुक्तमित्याशङ्क्य आह

साधको यत्र वा क्षेत्रं
मण्डलं वेश्म वा भजेत् २२९

स्थितस्तदनुसारेण
मध्यीभवति शंकरः ।

यत् नाम हि क्षेत्रादि यष्टा भजेत्, तत्र परप्रकाशात्मा शंकरः साधकाभिप्रायमाश्रित्य स्थितो मध्यीभवति तत्कार्यकारितया मध्यतामेतीत्यर्थः। चित्प्रकाश एव हि मध्यमिति उच्यते यतः सर्वत एव इतरप्रविभागः प्रवर्तते ॥

अत एव आह

स हि सर्वमधिष्ठाता
माध्यस्थ्येनेति तस्य यः ॥२३०

सौरः प्रकाशस्तत्पूर्व-
मित्थं स्याद्दिग्व्यवस्थितिः ।

सर्वमिति पूर्वापरादि । यथाहि लङ्घयितुमिष्टापि स्वच्छाया पुरः पुर एव भवति, तथा

पूर्वादितया अभिमतोऽपि परमेश्वरो मध्यतामेव एतीति अभिप्रायः । तस्येति सर्वाधिष्ठातुः शंकरस्य । सौर इति सूर्योदयरूप इत्यर्थः ॥

अतश्च

'पूर्वास्यः सौम्यवक्त्रो वा........।' (मा० वि० ८।१८)

इति युक्तमुक्तमित्याह

तन्मध्यस्थितनाथस्य
　　ग्रहीतुं दक्षिणं महः ॥ २३१ ॥
उदङ्मुखः स्यात् पाश्चात्यं
　　ग्रहीतुं पूर्वतोमुखः ।

एतच्च मुमुक्षुबुभुक्षुविषयमिति अनन्तरमेव दर्शितम् । तदुक्तं

'प्रागाशास्थे भोगदायि पश्चाद्वक्त्रं तु संमुखम् ।
सौम्यास्ये भैरवीयं तु संसारप्लोषभीषणम् ॥'

इति ॥

ननु एवमुपविश्य किं कुर्यादित्याशङ्क्य आह

उपविश्य निजस्थाने
　　देहशुद्धिं समाचरेत् ॥२३२॥

निजेति मुमुक्षुतादिसमुचिते ॥ २३२ ॥

अनेन च दिक्स्वरूपानन्तरोद्दिष्टं देहप्राणादिशोधनमुपक्रान्तम् । तदेव आह

अङ्गुष्ठाग्रात्कालवह्नि-
ज्वालाभास्वरमुत्थितम् ।
अस्त्रं ध्यात्वा तच्छिखाभि-
र्बहिरन्तर्दहेत्तनुम् ॥ २३३ ॥

ननु अत्र दाहो नाम किमुच्यते इत्याशङ्क्य आह

दाहश्च ध्वंस एवोक्तो
ध्वंसकं मन्त्रसंज्ञितम् ।
तेजस्तथाभिलापाख्य-
स्वविकल्परसोम्भितम्॥२३४॥

ध्वंस एवेति नतु काष्ठवत् भस्मीभावः । मन्त्रसंज्ञितं च तेजः कीदृगित्याह तथेति तत्तत्क्रमिकवर्णात्मका येऽभिलापाः शब्दाः, तदाख्यस्य स्वस्य प्रमातृस्वातन्त्र्यात्मनो विकल्पस्य यो रसो जीवितायमानत्वेन सारभूतो विमर्शस्तेन उम्भितं तदेकघटितमित्यर्थः ॥ २३४ ॥

ननु ध्वंसो नाम अभावः, स च न दृश्यमानस्य देहस्य लक्ष्यते । तत् कथं तनुं दहेदिति प्रत्यक्षविरुद्धमुक्तमित्याशङ्क्य आह

तेन मन्त्राग्निना दाहो
देहे पुर्यष्टके तथा ।
देहपुर्यष्टकाहन्ता-
विध्वंसादेव जायते ॥२३५॥

तेनेति एवंविधेन ॥ २३५ ॥

ननु सत्यपि अहन्ताया विध्वंसे न देहस्य दाहं पश्यामस्तत्सद्भावस्य प्रत्यक्षसिद्धत्वादित्याशङ्क्य आह

नहि सद्भावमात्रेण
देहोऽसावन्यदेहवत् ।
अहन्तायां हि देहत्वं
सा ध्वस्ता तद्दहेद्ध्रुवम् ॥२३६॥

अयं च अत्र प्रयोगः—असौ विवादास्पदीभूतः साधकदेहो देहो न भवति अहन्तानास्पदत्वात् । यत् यदीयाहन्तानास्पदीभूतः, स तस्य

देहो न भवति अहन्तानास्पदत्वात् । यत् यदीयाहन्तानास्पदं, तत् तदीयदेहो न भवति यथा अन्यदेहः । यो यद्देहः, स तदहन्तास्पदं यथा पामरदेहः । अयं च देहो न अस्य अहन्तास्पदं, तस्मात् न देह इति ॥ २३६ ॥

एवमनात्मस्वभावे देहादौ तदनुवेधमपि अवधूय पराहंपरामर्शमये सत्यरूपे चिदात्मनि विश्राम्येदित्याह

तद्देहसंस्कारभरो
भस्मत्वेनाथ यः स्थितः ।
तं वर्मवायुनाधूय
तिष्ठेच्छुद्धचिदात्मनि ॥ २३७॥

तत्र अस्य विश्रान्त्या किं स्यादित्याशङ्क्य आह

तस्मिन्ध्रुवे निस्तरङ्गे
समापत्तिमुपागतः ।
संविदः सृष्टिधर्मित्वा-
दाद्यामेति तरङ्गिताम् ॥ २३८

सैव मूर्तिरिति ख्याता
तारसद्बिन्दुहात्मिका ।

सैवेति आद्या तरङ्गिता । मूर्तिरिति देहप्राणाद्यात्मनः परिमितस्य मातुः शुद्धशरीरसृष्ट्युदये 'मूर्छा मोहसमुच्छ्राययोः' इति पाठादपरिमितीकरणात्मकसमुच्छ्रायप्राप्तिः । यदुक्तम्

'अनन्तो भैरवोच्छ्रायो मूर्तिरेषा परा मता ।
यस्यास्तु न्यासमात्रेण अणुत्वं प्रविलीयते ॥'

इति । तारः प्रणवः, सद्बिन्दुहात्मिकेति हमितिरूपेत्यर्थः । तदुक्तं

'ततोऽस्य योजयेच्छक्तिं सोऽहमित्यपराजिताम् ।'

इति ॥

इदानीं विशेषन्यासवैचित्र्यमभिधातुमाह

ततो नवात्मदेवेन
न्यासस्तत्त्वोदयात्मकः २३९
अङ्गवक्त्राणि तस्यैव
स्वस्थानेषु नियोजयेत् ।
अथ मातृकया प्राग्व-
त्तत्त्वस्फुटतात्मकः ॥२४०॥

त्रितत्त्वन्यासता चास्य
पृष्ठे कक्ष्यात्रयागते ।
ततोऽघोराष्टकन्यासः
शिरस्तच्चरणात्मकम् ॥२४१॥
ततोऽपि शिवसद्भाव-
न्यासः स्वांगस्य संयुतः ।
इत्थ कृते पञ्चकेऽस्मि-
न्यत्तन्मुख्यतया भवेत् २४२
उपास्यमर्च्यं तत्साङ्गं
षष्ठे न्यासे नियोजयेत् ।
तेनात्र न्यासयोग्योऽसौ
भगवान्रतिशेखरः ॥२४३॥
ऊर्ध्वं न्यास्यो नवाख्यस्य
मुख्यत्वेऽन्योन्यधामता ।

तत्त्वोदयात्मक इति न्यासफलमुक्तम् । त्रितत्त्वेति शिवविद्यात्मलक्षणम्, अन्यथा हि एतन्मते श्रीरतिशेखरभैरवस्य न्यासविधौ विवर्जितत्वं न

स्यात् । अस्य पृष्ठे इति मातृकान्यासस्य उपरि । कक्ष्यात्रयागते इति शिखाहृत्पादलक्षणकक्ष्या-त्रयमागत्येत्यर्थः । अत्र पक्षे च

'.................मूर्त्यङ्गसंयुताः ।' (श्लो० २४७)

इति मूर्तिः सत्ता सद्भाव इत्यर्थः । उर्ध्वे इति न्यासपञ्चकस्य । ननु य एव मुख्यतया उपास्यः स एव षष्ठे न्यासे योज्य इति उक्तम् । तत् कथमिह इदानीमेव तत्र रतिशेखरो न्यास्य इति उच्यते इत्याशङ्क्य आह नवाख्यस्येत्यादि तेन प्रथमन्यासस्थाने रतिशेखरो योज्यः, षष्ठे तु नवात्मेति ॥

एवमियमेव अन्यत्रापि वार्तेत्याह

एवं भैरवसद्भाव-
नाथे मुख्यतया यदि ॥२४४॥
उपास्यता तत्तत्स्थाने
प्राङ्न्यास्यो रतिशेखरः ।

नच एतत् स्वोपज्ञमेव अस्माभिरुक्तमित्याह

इत्थं श्रीपूर्वशास्त्रे मे
संप्रदायं न्यरूपयत् ॥२४५॥

शंभुनाथो न्यासविधौ
देवो हि कथमन्यथा ।
न्यासे विवर्ज्यतेऽमुष्मि-
न्नङ्गान्यप्यस्य सन्ति हि २४६

शंभुनाथ इति श्रीलक्ष्मणगुप्तमते हि अन्यथा न्यासविधिरित्याशयः । श्रीशंभुनाथस्य पुनरेवं न्यासाभिधाने कोऽभिप्राय इत्याशङ्क्य आह देवो हीत्यादि । देवो रतिशेखरः कथं विवर्ज्यते इति वर्जयितुं न न्याय्य इत्याशङ्क्य उक्तमङ्गान्यप्यस्य सन्ति हीति श्रीभैरवसद्भावादिभैरवान्तरसमानन्यायत्वादिति अभिप्रायः ॥२४६॥

श्रीलक्ष्मणगुप्तः पुनरेतदन्यथा व्याचख्यावित्याह

मूर्तिः सृष्टिस्त्रितत्त्वं चे-
त्यष्टौ मूर्त्यङ्गसंयुताः ।
शिवः साङ्गश्च विज्ञेयो
न्यासः षोढा प्रकीर्तितः २४७
अस्योपरि ततः शाक्तं
न्यासं कुर्याच्च षड्विधम् ।

मूर्तिः साङ्गवक्त्रो नवात्मा शाक्तन्यासे यदुपरि साङ्गवक्त्रा परापरा । सृष्टिर्मातृका यदुपरि मालिनी । त्रितत्त्वं भैरवसद्भावरतिशेखरनवात्मरूपं यदुपरि परादित्रितयम् । अष्टावघोराद्या यदुपरि अघोर्याद्यष्टकम् । मूर्त्यङ्गेति मूर्तेर्नवात्मनोऽङ्गानि यदुपरि विद्याङ्गपञ्चकम् । शिवो भैरवसद्भावः साङ्गवक्त्रो यदुपरि साङ्गवक्त्रो मातृसद्भावः। एतच्च उभयथापि उपसंहरति न्यासः षोढा प्रकीर्तित इति । न्यासशब्दः काकाक्षिन्यायेन योज्यः । अस्येति शांभवस्य न्यासस्य ॥

तदेव आह

परापरां सवक्त्रां प्रा-
　क्ततः प्रागिति मालिनीम् २४८
पश्चात्परादित्रितयं
　शिखाहृत्पादगं क्रमात् ।
ततः कवक्त्रकण्ठेषु
　हृन्नाभीगुह्यऊरुतः ॥२४९॥
जानुपादेऽप्यघोर्याद्यं
　ततो विद्याङ्गपञ्चकम् ।

ततस्त्वावाहयेच्छक्तिं
मातृसद्भावरूपिणीम् ॥२५०॥
योगेश्वरीं परां पूर्णां
कालसंकर्षिणीं ध्रुवाम् ।

यदा पुनरेतदेव शास्त्रानुसारेण साधयितुमिष्टं, तदा अयं विशेष इत्याह

अङ्गवक्त्रपरीवार-
शक्तिद्वादशकाधिकाम् ॥२५१॥
साध्यानुष्ठानभेदेन
न्यासकाले स्मरेद्गुरुः ।

ननु अस्मिन्दर्शने त्रिकमेव परमार्थ इति किमनेन चतुर्थेन रूपेण उपदिष्टेनेत्याशङ्क्य आह

परैव देवीत्रितय-
मध्ये याभेदिनी स्थिता २५२
सानवच्छेदचिन्मात्र-
सद्भावेयं प्रकीर्तिता ।
सारशास्त्रे यामले च
देव्यास्तेन प्रकीर्तितः ॥२५३॥

मूर्तिः सवक्त्रा शक्तिश्च
शक्तित्रयमथाष्टकम् ।
पञ्चाङ्गानि परा शक्ति-
र्न्यासः शाक्तोऽपि षड्विधः २५४
यामलोऽयं महान्यासः
सिद्धिमुक्तिफलप्रदः ।

प्रकीर्तितेति अर्थात् भगवता श्रीकण्ठनाथेन । देव्या इति प्रष्टृत्वेन स्थितायाः । यदभिप्रायेणैव प्राक्

'तत्सारं तच्च हृदयं स विसर्गः परः प्रभुः ।
देव्यायामलशास्त्रे सा कथिता कालकर्षिणी ॥
महाडामरके यागे श्रीपरामस्तके स्थिता ।
श्रीपूर्वशास्त्रे सा मातृसद्भावत्वेन वर्णिता ॥' (३।७१)

इत्यादि उक्तम् । अत एव शाक्तोऽपि न्यासः षोढेत्याह तेनेत्यादि तेन परादेव्या एव अनवच्छिन्नचिन्मात्ररूपतया पृथगुपदेशेन हेतुना शक्तोऽपि न्यासः षड्विधः प्रकीर्तित इति संबन्धः। मूर्तिरिति तात्स्थ्यात् परापराशक्तिर्मालिनी ॥

ननु अयं शैवः शाक्तो वा न्यासः किमिति यौगपद्येनैव क्रियते इत्याशङ्क्य आह

मुक्त्येकार्थी पुनः पूर्वं
शाक्तं न्यासं समाचरेत् २५५

यदुक्तं

'वामो वायं विधिः कार्यो मुक्तिमार्गावलम्बिभिः।'

इति ॥२५५॥

अत्रैव व्याख्यानान्तरमपि अस्तीत्याह

गुरवस्त्वाहुरित्थं य-
न्न्यासद्वयमुदाहृतम्।
मुमुक्षुणा तु पादादि
तत्कार्यं संहृतिक्रमात् ॥२५६

नच अत्रैव अयं क्रम इत्याह

यावन्तः कीर्तिता भेदाः
शंभुशक्त्यणुवाचकाः।
तावत्स्वप्येषु मन्त्रेषु
न्यासः षोढैव कीर्तितः॥२५७

किंत्वावाह्यस्तु यो मन्त्रः
स तत्राङ्गसमन्वितः।

षष्ठः स्यादिति सर्वत्र
षोढैवायमुदाहृतः ॥ २५८ ॥

इह नाम केचन शांभवादिभेदभिन्नास्त-न्त्रान्तरीया मन्त्राः। तेषामपि अयमेव वीर्यरूपतया उक्तेन क्रमेण न्यासः कार्यः, किंतु य एव यत्र उपास्यत्वेन आवाह्यो मन्त्रः, स एव षष्ठे स्थाने योज्यो येन अयं सर्वत्र शास्त्रे तत्तदभीष्टफलप्रदः षोढैव न्यास उक्तः स्यात्। यदभिप्रायेण अन-न्तरमेव

'तेन भ्रष्टे विधौ वीर्ये स्वरूपे वानया परम् ।'
मन्त्रा न्यस्ताः पुनर्न्यासात्पूर्यन्ते तत्फलप्रदाः॥ (श्लो० १३५)

इति उक्तम् ॥ २५८ ॥

ननु एवं स्वात्मनि भैरवीभावः कृतो भवेत् भैरवस्य संनिधिनिमित्तमवश्यप्रदर्शनीया मुद्राः यत्

'एता मुद्रा महादेवि भैरवस्य प्रदर्शयेत् ।
आवाहने पूजनान्ते तथा चैव विसर्जने ॥'

इत्यादि उक्तं, तत् किमावाहनादाविह तद्दर्शनं कार्यं न वेत्याशङ्क्य आह

मुद्राप्रदर्शनं पश्चा-
त्कायेन मनसा गिरा ।

मनसेति

'............मुद्राख्याः शिवशक्तयः ।'

इत्याद्यनुसंधानमयेनेत्यर्थः । यदुक्तं

'मनोजा गुरुवक्त्रस्था वाग्भवा मन्त्रसंभवा ।
देहोद्भवाङ्गविक्षेपैर्मुद्रेयं त्रिविधा स्मृता ॥'

इति ॥

ननु इह देहशुद्धिमात्रं कर्तुं प्रक्रान्तं, तच्च एकतरेणापि न्यासेन सिध्येदिति अस्य षोढात्वे कोऽभिप्राय इत्याशङ्क्य आह

पञ्चावस्था जाग्रदाद्याः
षष्ठ्यनुत्तरनामिका ॥ २५९ ॥
षट्कारणषडात्मत्वा-
त्षट्त्रिंशत्तत्त्वयोजनम् ।
एवं षोढामहान्यासे
कृते विश्वमिदं हठात् ॥ २६०
देहे तादात्म्यमापन्नं
शुद्धां सृष्टिं प्रकाशयेत् ।

एवमपि षण्णामवस्थानां प्रत्येकं षट्कारणाधिष्ठानेन षडात्मतया षट्त्रिंशत्तत्त्वयोगानुसन्धानेनेत्यर्थः । यदुक्तमनेनैव अन्यत्र

'तत्र च पञ्च अवस्था जाग्रदाद्याः, षष्ठी च अनुत्तरा नाम स्वभावदशानुसंधेयेति षोढा न्यासो भवति, तत्र कारणानां ब्रह्मविष्णुरुद्रेश्वरसदाशिवानाश्रितरूपाणां प्रत्येकमधिष्ठानात् षट्त्रिंशत्तत्त्वकलापस्य लौकिकतत्त्वोत्तीर्णस्य भैरवभट्टारकाभेदवृत्तेर्न्यासे पूर्णत्वात् भैरवीभावः ।'

इति ॥

का नाम अस्याः शुद्धतेत्याशङ्क्य आह

मूर्तिन्यासात्समारभ्य
या सृष्टिः प्रसृतात्र सा ॥२६१

अभेदमानीय कृता
शुद्धा न्यासबलक्रमात् ।

इह

'तस्मिन्ध्रुवे निस्तरङ्गे समापत्तिमुपागतः ।
संविदः सृष्टिधर्मित्वादाद्यामेति तरङ्गिताम् ॥
सैव मूर्तिरिति ख्याता..........।' (श्लो० २३८)

इत्याद्युपक्रमेण मूर्तिन्यासात् प्रभृति साधकदेहस्य या सृष्टिः प्रसृता, सा अत्र न्यासबलक्रमा-

दभेदमानीय कृता शुद्धा भैरवीभावावष्टम्भस्वभावेत्यर्थः ॥

अतश्च देहदाहानन्तरमेव यष्टा तदुत्तीर्णे शुद्धचिदात्मनि शिवे रूढ इति किमस्य पुनः शुद्धदेहसृष्ट्येति चोदयन्तो दूरं निरस्ता इत्याह

तेन येऽचोदयन्मूढाः
पाशदाहविधूनने ॥ २६२ ॥
कृते शान्ते शिवे रूढः
पुनः किमवरोहति ।
इति ते दूरतो ध्वस्ताः
परमार्थं हि शांभवम् ॥२६३॥
न विदुस्ते स्वसंवित्ति-
स्फुरत्तासारवर्जिताः ।

शांभवपरमार्थावेदनमेव उपपादयति

न खल्वेष शिवः शान्तो
नाम कश्चिद्विभेदवान् ॥२६४

सर्वेतराध्वव्यावृत्तो
घटतुल्योऽस्ति कुत्रचित् ।

ननु यदि एवंविधो न शिवस्तत्कतर इत्याशङ्क्य आह

महाप्रकाशरूपा हि
येयं संविद्विजृम्भते ॥२६५॥
स शिवः शिवतैवास्य
वैश्वरूप्यावभासिता ।

विजृम्भते इति विश्वेन रूपेण अवभासते इत्यर्थः। एतावदेव हि शिवस्य शिवत्वं—यत् तेन तेन रूपेण अवभासते इति उक्तं वैश्वरूप्यावभासितैव अस्य शिवतेति ॥

एवंस्वभावत्वादेव च अस्य न अत्र परापेक्षेत्याह

तथाभासनयोगोऽतः
स्वरसेनास्य जृम्भते ॥२६६॥

ननु यदि एवं भेदेनैव अयमवभासते, तत् सदैव संसारः स्यात्, नतु कदाचिदपि कैवल्यमित्याशङ्क्य आह

भास्यमानोऽत्र चाभेदः
स्वात्मनो भेद एव च ।

अत्रेति स्वारसिके तथाभासने ॥

एतन्निबन्ध एवच बन्धमोक्षविभाग इत्याह

भेदे विजृम्भते माया
मायामातुर्विजृम्भते ॥२६७॥
अभेदे जृम्भतेऽस्यैव
मायामातुः शिवात्मता ।

ननु कथमस्य मायाप्रमातृत्वे सति अभेदो यन्नान्तरीयकं शिवात्मत्वं स्यादित्याशङ्क्य आह

मायाप्रमाता तद्रूप-
विकल्पाभ्यासपाटवात् ॥२६८
शिव एव तदभ्यास-
फलं न्यासादि कीर्तितम् ।

ननु यदि एवं, तत् किमनेन न्यासादिनेत्याशङ्क्य आह तदभ्यासफलमिति तदभ्यास एव फलं प्रयोजनमस्येत्यर्थः ॥

ननु एवमभ्यासमात्रादेव कथं शिवत्वं भवेदित्याशङ्कां गर्भीकृत्य दृष्टान्तयति

यथाहि दुष्टकर्मास्मी-
त्येवं भावयतस्तथा ॥२६९॥
तथा शिवोऽहं नान्योऽस्मी-
त्येवं भावयतस्तथा ।

यथाहि दुष्टं कर्म करोमीत्येवं भावयतस्तथा दुष्टकर्मत्वं भवेत्, नतु सुकृतकर्मत्वं; तथा शिवोऽहमद्वितीयोऽहमित्यादि भावयतस्तथा शिवत्वमेवेत्यर्थः ॥

ननु प्राग्विकल्पाभ्यासपाटवात् निर्विकल्पकता भवतीत्युक्तं, तत् कथमिह शिवत्वं भवेदित्युच्यते इत्याशङ्क्य आह

एतदेवोच्यते दार्ढ्यं
विमर्शहृदयङ्गमम् ॥२७०॥
शिवैकात्म्यविकल्पौघ-
हारिका निर्विकल्पता ।

एतदेव शिवोऽहमित्याद्यात्मकविकल्पाभ्यासस्वभावभावनापर्यन्तोपरतं शिवत्वं निर्विकल्पताविमर्शैकसतत्त्वं दार्ढ्यं च उच्यते सर्वत्र तथा अभिधीयते इत्यर्थः ॥

एतदेव व्यतिरेकद्वारेण दर्शयति

अन्यथा तस्य शुद्धस्य
विमर्शप्राणवर्तिनः ॥२७१॥
कथं नामाविमृष्टं स्या-
द्रूपं भासनधर्मणः ।

यदि हि एतदविकल्पात्मपरामर्शमयं शिवत्वं भावनालभ्यं न भवेत्, तत् विकल्पकलङ्कोन्मुक्तस्य सहजविमर्शात्मनः स्वप्रकाशस्य तस्य कथं नाम अविमृष्टं रूपं स्यात् सततविमृष्टं भवेदित्यर्थः ॥

यदि हि एवं न भवेत्, तत् देहादिप्रमातारोऽपि कथं न शिवात्मना प्रस्फुरेयुरित्याह

तेनातिदुर्घटघटा-
स्वतन्त्रेच्छावशादयम् ॥२७२॥

भानपि प्राणबुद्ध्यादिः
　　स्वं तथा न विकल्पयेत् ।

तेन शिवत्वस्य भावनालभ्यत्वेन हेतुना भानान्यथानुपपत्त्या शिवात्मना भानपि अयं देहादिः प्रमाता तत्तद्दुर्घटकारिपरमेश्वरेच्छामहिम्ना तथा शिवात्मना स्वं न विकल्पयेत् विमृशेदित्यर्थः । घटनं घटेति भिदादित्वादङ् ॥

ननु अस्य मा भूदेवं परामर्शः, प्रत्युत विपरीतपरामर्शयोगोऽस्तीत्याह

प्रत्युतातिस्वतन्त्रात्म-
　　विपरीतस्वधर्मताम् ॥२७३॥
विनाश्यनीशायत्तत्व-
　　रूपां निश्चित्य मज्जति ।

आयत्तत्वं पारतन्त्र्यम् ॥

एवं शिवत्वस्य भावनालभ्यत्वमेव युक्तमिति उपसंहरति

ततः संसारभागीय-
　　तथानिश्चयशातिनीम् ॥२७४

नित्यादिनिश्चयद्वारा-
मविकल्पां स्थितिं श्रयेत् ।

तथेति विपरीतस्वधर्मतया, अत एव उक्तं नित्यादिनिश्चयद्वारामिति, आदिशब्दादीशत्वा-नायत्तत्वादि ॥

ननु सर्वैरेव

'करणेन नास्ति कृत्यं क्वापि भावनयापिवा ।' (शि० द० ७।६)

इत्यादि उक्तं, तत् किमिह भावनापर्यवसायि-न्यासादिना अभिहितेनेत्याशङ्क्य आह

ये तु तीव्रतमोद्रिक्त-
शक्तिनिर्मलताजुषः ॥२७५॥
न ते दीक्षामनुन्यास-
कारिणश्चेति वर्णितम् ।

वर्णितमिति द्वितीयाह्निके ॥

एवमेतत् प्रसङ्गादभिधाय प्रकृतमेव आह

एवं विश्वशरीरः स-
न्विश्वात्मत्वं गतः स्फुटम् २७६
न्यासमात्रात् तथाभूतं
देहं पुष्पादिनार्चयेत् ।

पृथङ्मन्त्रैर्विस्तरेण
संक्षेपान्मूलमन्त्रतः ॥२७७॥
धूपनैवेद्यतृप्त्याद्यै-
स्तथा व्याससमासतः ।

पृथगिति अङ्गवक्त्रादिभेदेन ॥

ननु इदं न्यासादि सर्वं करकार्यं, तत् करेण तावत् केन एतत् क्रियते इति न जानीम इत्याशङ्क्य आह

संसारवामाचारत्वा-
त्सर्वं वामकरेण तु ॥२७८॥
कुर्यात्तर्पणयोगं च
दैशिकस्तदनामया ।

वामः संसारविपरीतो लोकबहिष्कृतो मुक्त्य-नुगुणो रहस्य आचारः ॥

अत एव आगमोऽप्येवमित्याह

वामशब्देन गुह्यं श्री-
मतङ्गादावपीरितम् ॥२७९॥

यदुक्तं तत्र

'रहस्योक्त्या स्मृतं वामं पत्युस्तेजः क्रियात्मकम् ।' (१।४।२५)

इति उपक्रम्य

'यतस्तस्मात्स भगवान् वामगुह्यः प्रभाष्यते ।' (१।४।२८)

इति । आदिशब्देन श्रीनन्दिशिखादि । यदुक्तं तत्र

'वामं गुह्यं समाख्यातममृतं खेचरीप्रियम् ।
रहस्यं सर्वभूतानां वामशब्देन कीर्त्यते ॥'

इति ॥ २७९ ॥

न केवलमत्रैव वामशब्दस्य रहस्यार्थाभिधायित्वं, यावदन्यत्रापीत्याह

वामाचारपरो मन्त्री
यागं कुर्यादिति स्फुटम् ।
श्रीमद्भर्गशिखाशास्त्रे
तथा श्रीगमशासने ॥२८०॥

यदुक्तं तत्र

'वामाचारपरो मन्त्री ततो यागं समाचरेत् ।'

इति । ननु भवतु नाम एतत्, तर्पणं तु वामकरानामिकया कार्यमित्यत्र किं प्रमाणमित्याशङ्क्य आह तथेत्यादि ॥ २८० ॥

तदेव पठति

सर्वतीर्थेषु यत्पुण्यं
सर्वयज्ञेषु यत्फलम् ।
तत्फलं कोटिगुणित-
मनामातर्पणात्प्रिये ॥२८१॥

अनामेति अर्थादङ्गुष्ठयुक्ता । तदुक्तं तत्रैव

'वामपाणौ जपन्त्याश्च तुम्बरोश्चापि मेलके ।
दातव्यं विप्रुषामात्रमुपर्युपरि कल्पितम् ॥'

इति । श्रीसंकर्षणीयामले

'इत्येतत्परमानन्दं महासर्वमनुत्तमम् ।
योगिनीवल्लभं भद्रे अर्घपात्रे प्रपूजयेत् ॥
तेनैकविप्रुषामात्रतर्पणं सर्वदा स्मृतम् ।
वामहस्तेन कर्तव्यमनामाङ्गुष्ठयोगतः ॥'

इति । नवनित्याविधानेऽपि

'अङ्गुष्ठानामिकाभ्यां तु तर्पयेत्परमेश्वरीः ।'

इति । अन्यत्र पुनर्मध्यमाङ्गुष्ठयोगेनापि तर्पणमुक्तम् । तथाच द्वादशसाहस्रे श्रीमदानन्देश्वरे

'दिव्यं तेजः सुगन्धाढ्यं प्रदद्देत्मातृमण्डले ।
मध्यमाङ्गुष्ठयोगेन वामहस्तेन भैरवि ॥
तदा सिद्धिं लभेताशु तन्त्रोक्तां नात्र संशयः ।'

इति । भूतक्षोभेऽपि

'मुद्रां कापालिनीं बद्ध्वा दक्षहस्तेन साधकः ।
पात्रं तदुपरि स्थाप्यं मध्यमाङ्गुष्ठयोगतः ॥
क्षिप्त्वैकं विप्रुषं वक्त्रे तर्पयेद्देवतागणम् ।'

इति । श्रीपञ्चामृतेऽपि

'तर्जनी शत्रुविजये मध्यमा तर्पणे स्मृता ।
अनामा शोषणे योज्या कनीया हीनकर्मसु ॥
तस्मात्सर्वप्रयत्नेन मध्यमाङ्गुष्ठयोगतः ।
तर्पयेद्देवदेवेशं मातृचक्रं विशेषतः ।
सर्वकर्मसु सामर्थ्यान्मध्यमा तु प्रशस्यते ॥'

इति । तथा

'अङ्गुष्ठो भैरवः साक्षाच्चामुण्डा मध्यमा भवेत् ।
उभयोः संगमो ह्येष सर्वसिद्धिकरः परः ॥'

इति । तदेवं यत् शास्त्रमधिकृत्य साधकस्य मद्य-संस्कारश्चिकीर्षितः, तदनुसारेणैव तर्पणमपि तेन कार्यमिति विषयविभागः ॥ २८१ ॥

ननु एवं वामशब्दस्य रहस्यार्थाभिधायित्वं सिद्धं, वामकरत्वे पुनः किं प्रमाणमित्याशङ्क्य आह

श्रीमन्नन्दिशिखायां च
श्रीमदानन्दशासने ।

तदुक्तं स्रुक्च पूर्णायां
स्रुवश्चाज्याहुतौ भवेत् ॥२८२॥
शेषं वामकरेणैव
पूजाहोमजपादिकम् ।

इह पूर्णायामाज्याहुतौ स्रुक् स्रुवश्च अर्थादुभाभ्यां कराभ्यां ग्राह्यौ । यदुक्तं

'पूर्णाहुतिप्रयोगं तु कथयाम्यधुना तव ।
ऋजुकाय ऋजुग्रीवः समपादो व्यवस्थितः ॥
नाभिस्थाने स्रुचो मूलमुत्तानाग्रमुखं समम् ।
स्रुच्युपरि स्रुवं देवि कृत्वा चैवमधोमुखम् ॥
पुष्पं दत्त्वा स्रुगग्रे तु दर्भेण सहितौ करौ ।
मुष्टिना चैव हस्ताभ्यां गृहीत्वा यत्नतोऽपिच ॥
अग्रतो दक्षिणं हस्तं वामं वै पृष्ठतः प्रिये ।
मुष्टिभ्यां संगृहीत्वा वै उत्तानकरयोगतः ॥'

इति । अन्यत् पुनः शिष्टं पूजादिकं कर्म वामकरेणैव कार्यं भवेदिति वाक्यार्थः ॥

ननु एवं देहस्य यजनेन किं स्यादित्याशङ्क्य आह

एवमानन्दसंपूर्णं
सर्वौन्मुख्यविवर्जितम् ॥२८३॥

यागेन देहं निष्पाद्य
भावयेत शिवात्मकम् ।

ननु कथमिदमनात्मरूपं देहादि शिवात्मकतया भावनीयमित्याशङ्क्य आह

गलिते विषयौन्मुख्ये
पारिमित्ये विलापिते ॥२८४॥
देहे किमवशिष्येत
शिवानन्दरसादृते ।

अतश्च एवमभ्याससहितः साधकः शिव एव भवेदित्याह

शिवानन्दरसापूर्णं
षट्त्रिंशत्तत्त्वनिर्भरम् ॥२८५॥
देहं दिवानिशं पश्य-
न्नर्चयन्स्याच्छिवात्मकः ।

ननु यदि एवं देहदर्शनादिनैव साधकस्य शिवैकात्म्यमुदियात्, तत् किमस्य बाह्येन लिङ्गादिना स्यात् । बाढमित्याह

विश्वात्मदेहविश्रान्ति-
तृप्तस्तल्लिङ्गनिष्ठितः ॥२८६॥
बाह्यं लिङ्गव्रतक्षेत्र-
चर्यादि नहि वाञ्छति ।

यस्य पुनरेवं विश्रान्तिर्न स्यात्, तं प्रति एतत् बाह्यमुच्यते इत्याह

तावन्मात्रात्त्वविश्रान्तेः
संविदः कथिताः क्रियाः २८७
उत्तरा बाह्ययागान्ताः
साध्या त्वत्र शिवात्मता ।

ननु आसां बाह्यानां क्रियाणामपि कथनेन कोऽर्थ इत्याशङ्क्य उक्तं साध्या त्वत्र शिवात्मतेति । तुर्हेतौ ॥

इदानीं विशेषन्यासवैचित्र्यानन्तरोद्दिष्टं विशेषार्घपात्रमभिधातुमाह

ततोऽर्घपात्रं कर्तव्यं
शिवाभेदमयं परम् ॥२८८॥

आनन्दरससंपूर्णं
विश्वदैवततर्पणम् ।
यथैव देहे दाहादि-
पूजान्तं तद्वदेव हि ॥२८९॥
अर्घपात्रेऽपि कर्तव्यं
समासव्यासयोगतः ।

आनन्दरसो मद्यादिरूपः ॥

ननु स्वात्मनोऽर्घपात्रस्य वा पूजायामुपयुक्तं द्रव्यजातं कस्मादिह न उक्तमित्याशङ्कां प्रदर्श्य दूषयति

कानि द्रव्याणि यागाय
को न्वर्घ इति नोदितम् ॥२९०
सिद्धिकामस्य तत्सिद्धौ
साधनैव हि कारणम् ।
मुक्तिकामस्य नो किंचि-
न्निषिद्धं विहितं च नो ॥२९१॥

यदेव हृद्यं तद्योग्यं
शिवसंविदभेदने ।
कृत्वार्घपात्रं तद्विप्रुट्-
प्रोक्षितं कुसुमादिकम् ॥ २९२
कृत्वा च तेन स्वात्मानं
पूजयेत्परमं शिवम् ।

इह खलु पूजादिनिमित्तं नियतं किंचित् द्रव्यं न उदितं यतः सिद्धिकामस्य तावत् तस्यां शान्त्यादिरूपतया नियतायां सिद्धौ संपादनैव प्रतिनियतद्रव्योपयोगे कारणं यत् शान्तिमारभमाणेन साधकेन सितमेव, नतु रक्तं, द्रव्यादि उपादेयम्, एवं वश्यादौ रक्तमेव, नतु सितमिति; मुक्तिकामस्य तु न किंचिदपि विहितं निषिद्धं वेति तं प्रति कतरत् द्रव्यमभिदध्मो यतस्तस्य यदेव हृदयहारि, तदेव शिवसंविदैकात्म्यापत्तिरूपायां मुक्तावुपाय इति ॥

ननु अन्यैः 'कृत्वार्घपात्रम्' इत्यादि उपक्रम्य 'तत्स्थैः कुसुमैः स्वमभ्यर्च्य चात्मानम्' इत्या-

दिदृशा, अर्घपात्रसंभूतैरेव कुसुमैः स्वात्मादि-पूजनं कार्यमिति उक्तं, तत् कथमिह तद्विप्रुट्प्रो-क्षितेन अवान्तरेण कुसुमादिना तदभिधीयते इत्याशङ्क्य आह

अर्घपात्रार्चनादत्त-
पुष्पसंकीर्णताभयात्॥२९३॥

नार्घपात्रेऽत्र कुसुमं
कुर्याद्देवार्चनाकृते।

अर्घपात्रे तदमृती-
भूतमम्ब्वेव पूजितम्॥२९४॥

मन्त्राणां तृप्तये याग-
द्रव्यशुद्ध्यै च केवलम्।

एवं देहं पूजयित्वा
प्राणधीशून्यविग्रहान्॥२९५॥

अन्योन्यतन्मयीभूतान्
पूजयेच्छिवतादृशे।

तदिति अर्घपात्रे देवाद्यर्चननिमित्तं कुसुमानामकार्यत्वात् । यदुक्तं

'द्रव्यमम्बु समाख्यातं कुलोच्छुष्मादिभेदगम् ।'

इति। अन्योन्यतन्मयीभूतानिति परस्परावियोगात् ॥

कथं च एषां प्राणादीनां त्रयाणामपि विग्रहाणां पूजा कार्येत्याशङ्क्य आह

तत्र प्राणाश्रये न्यासे
बुद्ध्या विरचिते सति ॥२९६॥
शून्याधिष्ठानतः सर्व-
मेकयत्नेन पूज्यते ।

इह संकुचितो हि आत्मा शून्यप्रमातृतावलम्बनद्वारेण बुद्धिमधिष्ठाय प्राणे षोढा न्यासं विदध्यादिति त्रयाणामपि अपृथक्प्रयत्नं पूजा सिध्येदिति वाक्यार्थः ॥

पूजनं च अध्वन्यासपुरःसरमेव अत्र स्यादिति मनोयागमुपक्रममाणः प्रथममासनपक्षं दर्शयितुं प्राणे तत्तत्तत्त्वविभागोट्टङ्कनेन अध्वानमेव न्यसितुं निरूपयति

न्यस्येदाधारशक्तिं तु
नाभ्यधश्चतुरङ्गुलाम् ॥२९७॥
धरां सुरोदं तेजश्च
मेयपारप्रतिष्ठितेः ।
पोतरूपं मरुत्कन्द-
स्वभावं विश्वसूत्रणात्॥२९८॥
प्रत्येकमङ्गुलं न्यस्ये-
च्चतुष्कं व्योमगर्भकम् ।
ईषत्समन्तादमल-
मिदमामलसारकम् ॥२९९॥
ततो दण्डमनन्ताख्यं
कल्पयेल्लम्बिकावधि ।
तन्मात्रादिकलान्तं त-
दूर्ध्वं ग्रन्थिर्निशात्मकः॥३००॥
तत्र मायामये ग्रन्थौ
धर्माधर्माद्यमष्टकम् ।

वह्निप्रागादि माया हि
　　तत्सूतिर्विभवस्तु धीः ॥३०१॥
मायाग्रन्थेरूर्ध्वभूमौ
　　त्रिशूलाधश्चतुष्किकाम् ।
शुद्धविद्यात्मिकां ध्याये-
　　च्छदनद्वयसंयुताम् ॥ ३०२ ॥
तच्च तत्त्वं स्थितं भाव्यं
　　लम्बिकाब्रह्मरन्ध्रयोः ।

आधारशक्तिरिच्छात्मा पर्यन्तवर्तिनी पारमेश्वरी धारिका शक्तिर्यस्यां धरादि विश्वमाध्रियते। यदुक्तं

'यदिदं हि पृथिव्यादि क्रमेणाधारयोगि तत् ।
पर्यन्ते धृतिरूपायां शिवशक्तौ व्यवस्थितम् ॥
सा सर्वतत्त्वसविधे प्रथमांशे व्यवस्थिता ।
पर्यन्तभागिन्याधारशक्तिः शास्त्रेषु कथ्यते ॥'

इति। पोतस्य समुत्तरणरूपत्वात् पारप्रतिष्ठानमुचितं, तेजसश्च निखिलमेयपरिच्छित्तौ सहकारित्वमिति उक्तं मेयपारप्रतिष्ठितेरिति। विश्वसूत्रणादिति मरुदेव हि

'प्राक् संवित्प्राणे परिणता।'

इतिरीत्या प्रथमं विश्वमासूत्रयेदित्याशयः। व्योमगर्भकमिति व्यापकतया व्योम्नः सर्वान्तरालवर्तित्वात्। इदमाधारशक्तिमित्यनुस्यूतं धरादिकमा प्रकाश्यरूपत्वादीषत् तत्त्वेऽपि परमेश्वरशक्तिस्वभावतया च समन्तादमलं सकलधारणसामर्थ्ययोगि सारभूततया च सारकमिति उक्तमामलसारकमिति। तदुक्तम्

'आदावाधारशक्तिं तु नाभ्यधश्चतुरङ्गुलम्।
धरां सुरोदं पोतं च कन्दश्चेति चतुष्टयम्॥
एकैकाङ्गुलमेतत् स्याच्छूलस्यामलसारकम्।' मा०वि०८।५५

इति। अनन्ताख्यमिति तद्रुद्राधिष्ठितत्वात्। लम्बिकावधीति तालुरन्ध्रान्तम्। वह्निप्रागादीति। यदुक्तं

'धर्मं ज्ञानं च वैराग्यमैश्वर्यं च क्रमान्न्यसेत्।
सितरक्तपीतकृष्णा आग्नेयादीशदिग्गताः॥
पादकाः सिंहरूपास्ते त्रिनेत्रा भीमविक्रमाः।' (स्व०२।६२)

इति,

'अधर्माज्ञानावैराग्यमनैश्वर्यं तु प्राग्दिशः।
उत्तरान्तं निवेश्यं तु गात्रकाः सितवर्णकाः॥' (स्व०२।६४)

इति च । ननु धर्मादयोऽष्टौ बुद्धिधर्माः, तत् कथमिह मायायामुच्यन्ते इत्याशङ्क्य उक्तं माया हि तत्सूतिर्विभवस्तु धीरिति । चतुष्किकामिति चतुरश्रपीठिकाप्रायमसूरकरूपाम् । छदनद्वयेति अधः स्वरूपाच्छादकं मायारूपं छदनम्, ऊर्ध्वे तु मायाच्छादकं विद्यारूपम् । तदुक्तं

'स्मृताधश्छदनं माया विद्या तूत्तरमेव हि ।'

इति । लम्बिकाब्रह्मरन्ध्रयोरिति अर्थात् मध्ये । यदुक्तं

'कखलम्बिकयोर्मध्ये तत्तत्त्वमनुचिन्तयेत् ।' (मा०वि०८।६१)

इति ॥

ननु किमेतदागमत एव सिद्धमुत अन्यत्रापि तल्लिङ्गमस्तीत्याशङ्क्य आह

प्रकाशयोगो ह्यत्रैवं
दृक्श्रोत्ररसनादिकः ॥३०३॥
दक्षान्यावर्ततो न्यस्ये-
च्छक्तीनां नवकद्वयम् ।
विद्यापद्मेऽत्र तच्चोक्त-
मपि प्राग्दर्श्यते पुनः ॥३०४॥

वामा ज्येष्ठा रौद्री
काली कलबलविकरिके बलमथनी ।
भूतदमनी च मनोन्म-
निका शान्ता शक्रचापरुचिरत्र स्यात् ॥
विम्वी ज्ञप्तिकृतीच्छा
वागीशी ज्वालिनी तथा वामा ।
ज्येष्ठा रौद्रीत्येताः
प्राग्दलतः कालदहनवत्सर्वाः ॥३०६॥

दलकेसरमध्येषु
सूर्येन्दुदहनत्रयम् ।
निजाधिपैर्ब्रह्मविष्णु-
हरैश्चाधिष्ठितं स्मरेत् ॥३०७॥

शुद्धविद्याविजृम्भितमेव हि आलोचनात्मकं निर्विकल्पकं ज्ञानमिति उक्तमसकृत्, अत एव लोकस्य अत्र अभिघातवैचित्र्यादिन्द्रियवध-वैचित्र्यमिति सौश्रुताः । दक्षान्यावर्तत इति दक्षिणावर्तेन वामादिनवकम्, वामावर्तेन

विभ्व्यादिनवकं न्यस्येदित्यर्थः । विद्याशब्देन अत्र तद्दशाधिशायी ईश्वर उच्यते । अत्रेति ब्रह्मरन्ध्राधः । यदुक्तं

'पद्माकृति कखतत्त्वमैश्वरं चिन्तयेत्ततः ।
कर्णिकाकेसरोपेतं सबीजं विकसत्सितम् ॥
पूर्वपत्रादितः पश्चाद्वामादिनवकं न्यसेत् ।
वामा ज्येष्ठा च रौद्री च काली चेति तथापरा ॥
कलविकरणी चैव बलविकरणी तथा ।
बलप्रमथनी चान्या सर्वभूतदमन्यपि ॥
मनोन्मनी च मध्ये तु भानुमार्गेण विन्यसेत् ।
विभ्वादिनवकं चान्यद्विलोमात्परिकल्पयेत् ॥
विभुर्ज्ञानी क्रिया चेच्छा वागीशी ज्वालिनी तथा ।
वामा ज्येष्ठा च रौद्री च सर्वाः कालानलप्रभाः ॥

( मा० वि० ८।६६ )

इति । प्रागिति भुवनाध्वनि । पुनर्दर्श्यते इति प्रतीतिदार्ढ्याय । शक्रचापेति । यदुक्तं

'वामां पूर्वदले न्यस्येत्........................।' (स्व० २।६८)

इति उपक्रम्य

'शक्रचापनिभं देवि ध्यातव्यं शक्तिमण्डलम् ।'(स्व० २।७१)

इति । प्राग्दलत इति उपरीति शेषः ॥३०७॥

ननु मायान्तर्वर्तिनो ब्रह्मादय इति कथमेषां तद्दशाधिशायित्वं स्यादित्याशङ्क्य आह

मायोत्तीर्णं हि यद्रूपं
ब्रह्मादीनां पुरोदितम् ।
आसनं त्वेतदेव स्या-
न्नतु मायाञ्जनाञ्जितम् ॥३०८

पुरेति भुवनाध्वनि ॥ ३०८ ॥

ईश्वरसदाशिवयोः पुनर्मायोत्तीर्णमेव सदा-तनं रूपमस्तीति अनयोरिह अविशेषेणैव न्यास इत्याह

रुद्रोर्ध्वे चेश्वरं देवं
तदूर्ध्वे च सदाशिवम् ।
न्यस्येत्स च महाप्रेत
इति शास्त्रेषु भण्यते ॥३०९॥

अधिष्ठात्रधिष्ठेययोरभेदोपचारादत्र रुद्रशब्देन माया उच्यते । स इति सदाशिवः ॥३०९॥

तस्य च महत्त्वे प्रेतत्वे च किं निमित्तमित्याशङ्क्य आह

समस्ततत्त्वव्यापृत्वा-
न्महाप्रेतः प्रबोधतः ।

प्रकर्षगमनाच्चैष
लीनो यन्नाधरं व्रजेत् ॥३१०॥

समस्तानि तत्त्वानि शक्त्यन्तानि पञ्चत्रिंशत्, अतश्च सदाशिवोऽत्र अनाश्रितभट्टारक उच्यते । अयं हि तस्यैव परं रूपमिति सर्वत्र उद्घोष्यते । प्रबोधत इति प्रकर्षेणैति गच्छति बुध्यत इति । प्रकर्षगमनादिति प्रकृष्टमूर्ध्वं स्थानं गच्छतीति यतोऽयं प्राप्तो न अधरं गच्छेत् परमेव शिवमुपाश्रयतीत्यर्थः ॥ ३१० ॥

ननु सर्व एव शुद्धविद्यादशामधिशयानो न अधरं पदमासादयतीति सर्वत्र उक्तं, तत् कथमसावेव प्रेत इत्याशङ्क्य आह

विद्याविद्येशिनः सर्वे
ह्युत्तरोत्तरतां गताः ।
सदाशिवीभूय ततः
परं शिवमुपाश्रिताः ॥३११॥

सर्व एव हि मन्त्रमन्त्रेश्वरादयो

'निर्वात्यनन्तनाथस्तद्धामाविशति सूक्ष्मरुद्रस्तु ।'

इत्यादिदृशा उत्तरोत्तरतां गताः सन्तः सदाशिवतामासाद्य अनन्तरं परं शिवमुपाश्रिता इति एषामन्तरा अस्ति अधराधरपदस्पर्शः ॥३११॥

अयं पुनरेवं नेत्याह

अतः सदाशिवो नित्य-
मूर्ध्वदृग्भास्वरात्मकः ।
कृशो मेयत्वदौर्बल्या-
त्प्रेतोऽट्टहसनादितः ॥३१२॥

अतोऽधरपदागमनात् हेतोरयं सदाशिवः परप्रकाशोन्मुखतया नित्यमूर्ध्वदृक्, अत एव प्रकाशैकरूपतया भास्वरात्मकः, अत एव मेयसंस्कारस्यापि अपचयात् कृशः, अत एव नादामर्शतया प्रहसद्रूपत्वेन प्रेतस्तत्सदृश इत्यर्थः । स हि अट्टहासवशेन संजातनाद इव लोके सदा भवेदिति भावः । यदुक्तं

'ईश्वरं च महाप्रेतं प्रहसन्तं सचेतनम् ।
कालाग्निकोटिवपुषं..........॥' (मा० वि० ८।६८)

इति ॥ ३१२ ॥

एवमियता वामदक्षिणोभयात्मकतन्त्रान्तर-संसिद्धमासनमुक्तम्, इदानीं तु तदुत्तीर्णव्याप्तिकत्रिकार्थसंसूचकमासनक्रममभिधातुमाह

तस्य नाभ्युत्थितं मूर्ध-
रन्ध्रत्रयविनिर्गतम् ।
नादान्तात्म स्मरेच्छक्ति-
व्यापिनीसमनोज्ज्वलम् ३१३

अरात्रयं द्विषट्कान्तं
तत्राप्यौन्मनसं त्रयम् ।
पङ्कजानां सितं सप्त-
त्रिंशदात्मेदमासनम् ॥३१४॥

तस्य सदाशिवात्मनो महाप्रेतस्य नाभेस्तदवस्थाया जन्माधारभूमेरारभ्य उत्थितं शक्तिव्यापिनीसमनालक्षणेन शून्यात्मना मूर्धरन्ध्रत्रयेण विनिर्गतम्, अत एव त्रिवलयात्मकत्वात् नादान्तात्मकमरात्रयं द्विषट्कान्तं स्मरेत् द्वादशान्तपर्यन्तप्राप्तं ध्यायेदित्यर्थः । नाभ्युत्थितमित्यनेन च स्वरसत एव इदं सर्वेषां नित्योदित-

मिति प्रकाशितम्। औन्मनसमिति अत्र हि गलितत्वेऽपि भेदस्य कथंचित्संस्कारमात्रेण अस्ति अवस्थानम्। सितमिति एषणीयाद्युपरागशून्यत्वात्। अत एव उक्तम्

'उन्मनातः परं तत्त्वमनाख्यं यत्प्रकाशते।'

इति। सप्तत्रिंशदात्मेति सप्तत्रिंशत् तत्त्वानि सप्तत्रिंशत्तत्त्वात्मकं सप्तत्रिंशं तत्त्वं वा आत्मा प्रमातृरूपतया भित्तिभूतः पारमार्थिकः स्वभावो यस्य, तत् तथोक्तम्। इयत्पर्यन्तं हि सर्वतत्त्वानां भेदप्राणतया प्रमेयरूपत्वेन परस्मिन्प्रमातरि विश्रान्तिर्भवेदिति भावः। तदुक्तं

'तस्य नाभ्युत्थितं शक्तिशूलशृङ्गत्रयं स्मरेत्।
कखत्रयेण निर्यातं द्वादशान्तावसानकम्॥
चिन्तयेत्तस्य शृङ्गेषु शाक्तं पद्मत्रयं ततः।
सर्वाधिष्ठायकं शुक्लमित्येतत्परमासनम्॥' (मा०वि०८।७०)

इति॥ ३१४॥

ननु प्राक् पूजकस्य तावत् षोढान्यासक्रमेण षट्त्रिंशत्तत्त्वमयत्वमेव कार्यमिति उक्तं, पूज्यस्यापि एवं वक्ष्यते इति अधस्पदतास्पदस्यापि एतद्रूपत्वमेव उच्यमानं कथङ्कारं संगच्छतां नामेत्याशङ्क्य आह

अत्र सर्वाणि तत्त्वानि
भेदप्राणानि यत्ततः ।
आसनत्वेन भिन्नं हि
संविदो विषयः स्मृतः ॥३१५॥
एतान्येव तु तत्त्वानि
लीनानि परभैरवे ।
तादात्म्येनाथ सृष्टानि
भिदेवार्च्यत्वयोजने ॥३१६॥
श्रीमद्भैरवबोधैक्य-
लाभस्वातन्त्र्यवन्ति तु ।
एतान्येव तु तत्त्वानि
पूजकत्वं प्रयान्त्यलम् ॥३१७॥

आसनत्वेनेति अर्थादुक्तानि । संविद इति पूर्वं सप्तत्रिंशदात्मतया उक्तायाः । विषय इति आलम्बनमाश्रय आधार इति यावत् । भिदेव स्रष्टानीति । यदुक्तं

'स्वातन्त्र्यामुक्तमात्मानं स्वातन्त्र्याद्द्वयात्मनः ।
प्रभुरीशादिसंकल्पैर्निर्माय व्यवहारयेत् ॥' (ई०प्र० १।४७)

इति । अर्च्यत्वयोजने इति पूज्यत्वयोगनिमित्तमित्यर्थः । बोधैक्यलाभेति अत्र हि अशुद्धदेहदाहादिपुरःसरीकारेण शुद्धशरीरोत्पादाभिनिवेशस्यैव तरतमभावो भवेदिति भावः ॥

एतदेव अधिकावापेन उपसंहरति

पूजकः परतत्त्वात्मा
पूज्यं तत्त्वं परापरम् ।
सृष्टत्वादपरं तत्त्व-
जालमासनतास्पदम् ॥ ३१८ ॥

ननु यदि एवमपरं तत्त्वजालमासनत्वेन उक्तं, तत् कथमिति एतत्परमासनामिति आसनस्य परत्वमिह अभिहितमित्याशङ्कां गर्भीकृत्य अन्यस्मात् शास्त्रगणादस्य उत्कर्षं प्रतिपादयति

विद्याकलान्तं सिद्धान्ते
वामदक्षिणशास्त्रयोः ।
सदाशिवान्तं समना-
पर्यन्तं मतयामले ॥ ३१९ ॥

उन्मनान्तमिहाख्यात-
मित्येतत्परमासनम् ।
अर्चयित्वासनं पूज्या
गुरुपङ्क्तिस्तु भाविवत् ॥३२०॥

भाविवदिति । यद्वक्ष्यति
'गणपतिगुरुपरमाख्याः परमेष्ठी पूर्वसिद्धवाक्क्षेत्रपतिः
इति सप्तकमाख्यातं गुरुपङ्क्तिविधौ प्रपूज्यमस्मद्गुरुभिः॥' १६।१०
इति ॥ ३२० ॥

आसनार्चने च तन्त्रान्तरीयमत्रशिष्टं किंचि-
द्वक्तुमाह

तत्रासने पुरा मूर्ति-
भूतां सार्धाक्षरां द्वयीम् ।
न्यस्येद्व्याप्तृतयेत्युक्तं
सिद्धयोगीश्वरीमते ॥ ३२१ ॥

तत्र एवमुक्ते आसने पुरा अग्रकोटावौन्म-
नसे पङ्कजत्रये पूज्यतया मूर्तिभूतामपि सार्धा-
क्षरां द्वयीमपराभट्टारिकामधस्तनसमस्ताध्वग-
र्भीकारात्मना व्यापकत्वेन न्यस्येत् तद्वाचकतया
योजयेदित्यर्थः ॥ ३२१ ॥

तत्रत्यमेव ग्रन्थमर्थद्वारेण पठति

सदाशिवं महाप्रेतं
मूर्तिं सार्धाक्षरां यजेत्।
परत्वेन परामूर्ध्वे
गन्धपुष्पादिभिस्त्विति ॥३२२
विद्यामूर्तिमथात्माख्यां
द्वितीयां परिकल्पयेत्।

यदुक्तं तत्र

'ऊर्ध्वतश्च भवेत्पद्मं विद्येश्वरदलच्छदम् ।
ईश्वरं कर्णिकामूले सादाख्यं प्रेतरूपिणम् ॥
सार्धाक्षरद्वयीं देवीं मूर्तिभूतां प्रदापयेत् ।
स्वमन्त्रोच्चारमार्गेण अङ्गषट्कसमन्विताम् ॥
उर्ध्वतस्तु परादेवीं परत्वेन प्रदापयेत् ।
ततस्तु गन्धपुष्पैस्तु दीपधूपपवित्रकैः ॥
वस्त्रै रत्नादिभिर्भक्त्या पूजयेत विधानवित्।'

इति। अत्र च सार्धाक्षरामिति पठित्वा द्वयीं मातृकां मालिनीं च न्यस्येदिति न वाच्यम्। एवं हि अत्र औन्मनसस्य पङ्कजत्रयस्य वाचकमभिहितं स्यात्। 'अथात्माख्यां द्वितीयां परिकल्पयेत्' इत्यत्र च तृतीयां चतुर्थीं वेति

पाठो भवेत्, सिद्धातन्त्रे च सैकार्णेत्यादिना वक्ष्यमाणेन ग्रन्थेन च पौनरुक्त्यं प्रसजेदिति अलं गुर्वागमसंप्रदायशून्यैः सह संलापेन ॥

इदानीं सर्वस्यैव मन्त्रचक्रस्य पूजामभिधातुमाह

मध्ये भैरवसद्भावं
　दक्षिणे रतिशेखरम् ॥३२३॥
नवात्मानं वामतस्त-
　द्देवीवद्भैरवत्रयम् ।
मध्ये परां पूर्णचन्द्र-
　प्रतिमां दक्षिणे पुनः ॥३२४॥
परापरां रक्तवर्णां
　किंचिदुग्रां न भीषणाम् ।
अपरां वामशृङ्गे तु
　भीषणां कृष्णपिङ्गलाम् ॥३२५॥
प्राग्वद्द्विधात्र षोढैव
　न्यासो देहे यथा कृतः ।

ततः सांकल्पिकं युक्तं
वपुरासां विचिन्तयेत् ॥३२६॥

कृत्यभेदानुसारेण
द्विचतुःषड्भुजादिकम् ।

कपालशूलखट्वाङ्ग-
वराभयघटादिकम् ॥ ३२७॥

वामदक्षिणसंस्थान-
चित्रत्वात्परिकल्पयेत् ।

प्राग्वदिति नवात्मपरादिक्रमेण। सांकल्पिक-मिति संकल्पः साधकसंबन्ध्याशयविशेषः, अत एव उक्तं कृत्यभेदानुसारेणेति । वामदक्षिणेति तेन वामे कपालं, दक्षिणे शूलमित्यादिसंनिवे-शचित्रत्वम् ॥

ननु एवमासां कृत्यभेदानुसारेण परिकल्प-येदिति कस्मादुक्तमित्याशङ्क्य आह

वस्तुतो विश्वरूपास्ता
देव्यो बोधात्मिका यतः॥३२८

अनवच्छिन्नचिन्मात्र-
सारः स्युरपवृक्तये ।
सर्वं ततोऽङ्गवक्त्रादि
लोकपालास्त्रपश्चिमम् ॥३२९॥
मध्ये देव्यभिधा पूज्या
त्रयं भवति पूजितम् ।

तत इति वपुश्चिन्तनाद्यनन्तरम् । ननु एतत् मध्ये एव कस्मात्पूज्यमित्याशङ्क्य उक्तं त्रयं भवति पूजितमिति । अत्र हि कृतं पूजनं सर्वत्रापि भवेदिति भावः । तदुक्तं

'एवं मध्ये सदा पूजां शूलपद्मस्य कारयेत् ।'

इति ॥

देव्यभिन्नत्वमेव एषां दर्शयति

ततो मध्यगतात्तस्मा-
द्बोधराशेः सदैवतात् ॥३३०॥
अङ्गादि निःसृतं पूज्यं
विस्फुलिङ्गात्मकं पृथक् ।

तत इति देव्यभिन्नतया एषां पूज्यत्वात् ॥

ननु एतत् मध्यगाया एव देव्याः कस्माद्-
भिन्नतया पूज्यत्वेन उक्तमित्याशङ्क्य आह

मध्यगा किल या देवी
सैव सद्भावरूपिणी ॥३३१॥
कालसंकर्षिणी घोरा
शान्ता मिश्रा च सर्वतः ।
सिद्धातन्त्रे च सैकार्णा
परा देवीति कीर्तिता ॥३३२॥

सेति मध्यगा देवी ॥ ३३२ ॥

न केवलमेकार्णैव मध्यगा परा देवी, याव-
न्मातृकेति मालिनीति चोच्यते इत्याह

परा तु मातृका देवी
मालिनी मध्यगोदिता ।

अत्रैव अर्थद्वारेण श्रीसिद्धातन्त्रग्रन्थं पठति

मध्ये न्यस्येत्सूर्यरुचिं
सर्वाक्षरमयीं पराम् ॥३३३॥
तस्याः शिखाग्रे त्वेकार्णां
तस्याश्चाङ्गादिकं त्विति ।

यदुक्तं तत्र

'मध्यमे विन्यसेद्देवीं सर्वाक्षरमयीं शुभाम् ।
स्फुरत्सूर्यायुतप्रख्यां द्योतयन्तीमिदं जगत् ॥
तस्याः शिखाग्रे विन्यस्येत्परामेकाक्षरां शुभाम् ।
उत्कृष्टस्फटिकप्रख्यां समन्तादमृतस्रवाम् ॥
आप्यायनकरीं देवीं परां सिद्धिप्रदायिकाम् ।
न्यस्त्वा तस्याः शिखाग्रे तु ततोऽङ्गानि प्रकल्पयेत् ॥'

इति ॥

ननु एतत् मध्ये एव पूज्यमिति किमागमत एव सिद्धमुत अत्र युक्तिरपि काचित् स्यादित्याशङ्क्य आह

ततो विश्वं विनिष्क्रान्तं
पूजितं दक्षिणोत्तरे ॥३३४॥
स्यादेव पूजितं तेन
सकृन्मध्ये प्रपूजयेत् ।

ततो मध्यत एव विनिष्क्रान्तमिदं तत्तन्मन्त्राद्यात्मकं विश्वमर्थात् तत्र पूजितं तत्स्फारमात्रात्मनि उत्तरे दक्षिणेऽपि पूजितं स्यादेवेति मध्ये एव सकृत्पूजयेदिति वाक्यार्थः ॥

न केवलं श्रीसिद्धातन्त्रे एव सद्भावरूपिण्या मध्यगाया देव्या एवंरूपत्वमुक्तं, यावदन्यत्र अपीत्याह

श्रीदेव्यायामले चोक्तं
याग डामरसंज्ञिते ॥ ३३५ ॥

तदेव पठति

नासाग्रे त्रिविधं कालं
कालसंकर्षिणी सदा ।
मुखस्था श्वासनिःश्वास-
कलनी हृदि कर्षति ॥ ३३६ ॥
पूरकैः कुम्भकैर्धत्ते
ग्रसते रेचकेन तु ।
कालं संग्रसते सर्वं
रेचकेनोत्थिता क्षणात् ॥ ३३७ ॥
इच्छाशक्तिः परा नाम्ना
शक्तित्रितयबोधिनी ।
याज्या कर्षति यत्सर्वं
कालाधारप्रभञ्जनम् ॥ ३३८ ॥

इह खलु मुखस्था कालसंकर्षिणी भगवती सदा पार्श्ववाहद्वयात्मश्वासनिःश्वाससंकलनेन हृदि मध्यधाम्नि नासायाः शक्तेरग्रे त्रिविधं प्राणापानोदानलक्षणं कालं कर्षति तेन रूपेण संचारयति । यतो रेचकेन संहरति, पूरकेण प्रवेशं ददाति, कुम्भकेन धारयति, ऊर्ध्वरेचकेन च तत्तत्कारणपदोल्लङ्घनक्रमेण उत्थिता सती सर्वं कालं क्षणादेव सम्यगनवच्छिन्नमेव स्वरूपतापादनक्रमेण संहरतीति ।

'................सेच्छायाः प्रथमा तुटिः ।'

इत्युक्त्या परा इयमिच्छाशक्तिरिच्छाद्यात्मनः शक्तित्रितयस्य उत्पत्तिभूः प्रक्रान्तेन कालसंकर्षिणीलक्षणेन नाम्ना याज्या यदियं सर्वं प्राणादिपञ्चकात्मकं कालाधारं प्रभञ्जनं कर्षयति अन्तर्बहीरूपतया समुल्लासयतीत्यर्थः । यदुक्तं तत्र

' अयं पथद्वये कालः स्थूलश्चरति योगिनाम् ।
सव्यापसव्ये मध्ये च शक्तित्रयविभूषितः ॥
सा ग्रसेत्त्रिविधं कालं कालसंकर्षिणी तथा । '

इति,

'कालसंकर्षिणी नाम्ना कालं मुखबिले स्थितम् ।
श्वासनिःश्वासकलनी तस्य संकर्षणं हृदि ॥

पूरकेण समन्तात्तु कुम्भकेन च धारयेत् ।
रेचकेनोत्थिता देवी कालं संग्रसते क्षणात् ॥ '

इति,

' इच्छाशक्तिः परा नाम्ना शक्तित्रितयबोधिनी ।
याज्या कर्षयते सर्वं कालाधारप्रभञ्जनम् ॥ '

इति च ॥ ३३८ ॥

इदानीमुक्तस्य अस्य पूज्यचक्रस्य संकलनाक्रमेण आसनात् प्रभृति स्वदर्शनसमुचितं सतत्त्वमभिधत्ते

इह किल दृक्कर्मेच्छाः
शिव उक्तास्तास्तु वेद्यखण्डनके ।
स्थूले सूक्ष्मे क्रमशः
सकलप्रलयाकलौ भवतः॥ ३३९ ॥
शुद्धा एव तु सुप्ता
ज्ञानाकलतां गताः प्रबुद्धास्तु ।
प्रविभिन्नकतिपयात्मक-
वेद्यविदो मन्त्र उच्यन्ते ॥ ३४० ॥
भिन्ने त्वखिले वेद्ये
मन्त्रेशास्तन्महेशास्तु ।

भिन्नाभिन्ने तदियान्
　　सुशिवान्तोऽध्वोदितः प्रेते ॥ ३४१ ॥
ता एव गलति भेद-
　　प्रसरे क्रमशो विकासमायान्त्यः ।
अन्योन्यासंकीर्णा-
　　स्त्वरात्रयं गलितभेदिकास्तु ततः ३४२
पद्मत्रय्यौन्मनसी
　　तदिदं स्यादासनत्वेन ।

उक्ता इति मुख्यतः । सूक्ष्मे इति प्रलयाकलो वेद्यभागस्य संस्कारमात्रावशेषत्वात् । शुद्धा इति कथंचिद्वेद्यकालुष्यापगमात् । सुप्ता इति अप्रबुद्धाः । कतिपयात्मकेति नतु अखिलम्, तथात्वे हि आसां मन्त्रेशत्वं स्यात् । भिन्नाभिन्ने इति इदन्ताया अहन्तायां विश्रान्तेः । इयानिति अर्थात् भेदप्रधानः । गलतीति नतु गलिते, तथात्वे हि आसां पद्मत्रयत्वं न स्यात् । विकासमायान्त्य इति शूलस्य विवृताकारत्वात् । अत एव उक्तं अन्योन्यासंकीर्णा इति ॥

ननु एवमिच्छाज्ञानक्रियाणामासनतया आधारत्वमेव उक्तं स्यात्, आधेयस्तु किं तदतिरिक्तः पूज्यतया उपगन्तव्यो न वेत्याशङ्क्य आह

ता एवान्योन्यात्मक-
भेदावच्छेदनाजिहासुतया ॥ ३४३ ॥
किल शक्तितद्वदादि-
प्रभिदा पूज्यत्वमायाताः ।

ता एव दृक्कर्मेच्छाः परस्परव्यावृत्तिरूपभेदसंस्पर्शपरिजिहीर्षेव इति शक्त्यादित्रितयात्मना पूज्यदशामधिशेरते इति वाक्यार्थः ॥

ननु आसामात्मत्वेऽपि सकलादौ प्रस्फुटतया तथात्वं न लक्षितम्, इह तु स्फुटमेव तत् लक्ष्यते इत्यत्र किं निमित्तमित्याशङ्क्य आह

भेदगलनाद्यकोटे-
रारभ्य यतो निजं निजं रूपम् ॥ ३४४ ॥
बिभ्रति तास्तु त्रित्वं
तासां स्फुटमेव लक्ष्येत ।

संभाव्यवेद्यकालु-
　　ष्ययोगतोऽन्योन्यलब्धसंकरतः ३४५
प्राक् प्रस्फुटं त्रिभावं
　　नागच्छन्नत्र तु तथा न ।

भेदगलनाद्यकोटेरिति अरात्रयात्मिकायाः । अन्योन्यलब्धसंकरत इति वेद्यकालुष्यवशेन हि आसां परस्परस्य परभागो न भवेदिति भावः । प्रागिति सकलादौ प्रमातरि ॥

एवमासामत्यन्तमेव भेदग्लपनेनापि त्रित्वं न स्यादित्याह

अन्योन्यात्मकभेदा-
　　वच्छेदनकलनसंग्रसिष्णुतया ।
स्वातन्त्र्यमात्रसारा
　　संवित्सा कालकर्षिणी कथिता ॥ ३४६ ॥

एता अन्योन्यात्मकत्वेन भेदसंस्पर्शकलनस्य सम्यक् गन्धमात्रपरिहारेण अपि ग्रसनशील-तया गर्भीकृतेच्छाद्यवान्तरस्वरूपत्वात् स्वात-न्त्र्यमात्रसारा परप्रमातृरूपा संवित् कालकर्षिणी

कथिता सर्वत्र तथा व्यपदिश्यते इत्यर्थः । तेन आसामन्योन्यासंकीर्णत्वे गलद्भेदतायामरात्र-यत्वं, गलितभेदतायां पञ्चत्रयत्वम्, अन्योन्यात्मकत्वे गलद्भेदतायां शक्त्यादित्रयत्वं, गलितभेदतायां तु एवंरूपत्वमिति ॥ ३४६ ॥

न केवलमियं भेदावच्छेदनात्मनः कालस्य ग्रसिष्णुतया एवमुक्ता, यावत् बहिःसंकर्षणादपीत्याह

सैव च भूयः स्वस्मा-

त्संकर्षति कालमिह बहिष्कुरुते ।

संकर्षिणीति कथिता

ननु इह अनन्तरमेव

'मध्यगा किल या देवी सैव सद्भावरूपिणी ।
कालसंकर्षिणी................................॥' ( ३३२ )

इत्यादि उक्तं, तदत्र मातृसद्भावशब्दस्य अपि प्रवृत्तौ किं निमित्तमित्याशङ्क्य आह

मातृष्वेतेषु सद्भावः ॥ ३४७ ॥

तत्त्वं सत्ता प्राप्ति-

र्मातृषु मेयोऽनया संश्च ।

विश्वजननीषु शक्तिषु
परमार्थो हि स्वतन्त्रतामात्रम् ॥३४८

सैव च एतेषु समनन्तरोक्तेषु सकलादिषु सप्तसु मातृषु सता पारमार्थिकेन रूपेण भवनं, तत्त्वं, सतो भावः सत्ता प्रमातृतात्मस्वस्वरूपप्रतिलम्भात् प्राप्तिश्चेति । तथा अनया परामर्शमात्रसारया संविदा मातृषु जडोऽपि मेयो भावः सन् विश्रान्त इति । तथा सैव आसां स्वातन्त्र्यशक्तावेव विश्रान्तेरुक्तत्वात् विश्वसूतिहेतुभूतासु मातृषु इच्छादिशक्तिषु स्वतन्त्रतामात्ररूपः परमार्थ इति ॥ ३४८ ॥

ननु एतदपि आसनवदिच्छाद्यात्मकमेवेति कथं नाम पूज्यं स्यादित्याशङ्क्य आह

एषणविदिक्रियात्मक-
मेतत्पूज्यं यतोऽनवच्छिन्नम् ।
यस्मिन्सर्वावच्छे-
ददिशोऽपि स्युः समाक्षिप्ताः ॥३४९॥

अनवच्छिन्नमिति विशुद्धविमर्शमयप्रकाशरूपमित्यर्थः । यस्मिन्निति एषणविदिक्रियात्म-

नि अनवच्छिन्ने रूपे । समाक्षिप्ता इति अकिं-
चित्कर्य इत्यर्थः ॥३४९॥

ननु प्रकाशमात्रस्यैव पूज्यत्वमस्तु, किं विम-
र्शरूपतयेत्याशङ्क्य आह

अविकल्पमिह न याति हि
पूज्यत्वं

पूज्यत्वं न यातीति निर्विमर्शस्य प्रकाशस्य
जडप्रायत्वात् ॥

ननु अत्र भवतु विमर्शमयत्वं, तत्र तु किं
विशुद्धतयेत्याशङ्क्य आह

नच विकल्प एकत्र ।
बहवो धर्मास्तस्माद्
यो धर्मस्तावतो धर्मान् ॥ ३५० ॥
आक्षिपति तत्र रूढः
सर्वोत्कृष्टोऽधरस्थितास्त्वन्ये ।

विमर्श एव हि आऽयानतया भेदप्राणत्वा-
दविशुद्धतामधिशयानो विकल्प इति उच्यते ।
स च यदाभासविमर्शनशीलस्तदतिरिक्तमाभा-
सान्तरं

'तदतत्प्रतिभाभाजा मात्रैवातत्व्यपोहनात् ।
तन्निश्चयनमुक्तो हि विकल्पो घट इत्ययम् ॥' (ई०प्र०१।६।३)
इत्यादिनीत्या न स्पृशत्येव । तदिच्छाज्ञानक्रियादिसकलधर्माविभागस्वभावं रूपमेकैकधर्मपरामर्शिना विकल्पेन कथं परामृश्यते इति न विकल्पात्मकाविशुद्धविमर्शमयप्रकाशदशावेशिपूज्यत्वं युज्यते । तस्मात् यैव विशुद्धविमर्शमयस्वातन्त्र्यलक्षणा शक्तिरिच्छाज्ञानक्रियाद्यनन्तभेदभिन्नाः शक्तीराक्षिप्य वर्तते, तत्रैव विश्राम्यन् परः प्रकाशः सर्वोत्कृष्टतया पूज्यः । अन्ये तत्तदवच्छेदभाजः प्रकाशाः पुनरपकृष्टतया अधरस्थिता आसनदशामधिशेरते इत्यर्थः ॥

एतच्च गुरुशास्त्रसंप्रदायेन अस्माभिरुक्तमित्याह

इति भैरवपरपूजा-
तत्त्वं श्रीडामरे महायागे ॥ ३५१ ॥
स्वयमेव सुप्रसन्नः
श्रीमान् शंभुर्ममादिक्षत् ।

ननु भवतु नाम एवं, तत्रापि मनोयागे एव किमङ्गादि मध्ये पूज्यमुत सर्वत्रापीत्याशङ्क्य आह

बाह्ययागे तु पद्मानां
त्रितयेऽपि प्रपूजयेत् ॥३५२॥
अस्त्रान्तं परिवारौघ-
मिति नो दैशिकागमः ।

कथंच एतदित्याशङ्क्य आह

अग्नीशरक्षोवाय्वन्त-
दिक्षु विद्याङ्गपञ्चकम् ॥३५३॥
शक्त्यङ्गानि शिवाङ्गानि
तथैवात्र पुनर्हृदये ।
अस्त्रं न्यस्येच्चतुर्दिक्कं
मध्ये लोचनसंज्ञकम् ॥३५४॥
पत्राष्टकेऽष्टकयुग-
मघोरादेः स्वयामलम् ।
तथा द्वादशकं षट्कं
चतुष्कं मिश्रितं द्विशः ॥३५५॥
सर्वशो द्विगुणादीत्थ-
मावृतित्वेन पूजयेत् ।

लोकपालांस्ततः सास्त्रा-
न्स्वदिक्षु दशसु क्रमात्॥३५६॥
इत्थं त्रिशूलपर्यन्त-
देवीतादात्म्यवृत्तितः ।
तिष्ठन्नत्रार्पयन्विश्वं
तर्पयेद्देवतागणम् ॥ ३५७ ॥
ततो जपं प्रकुर्वीत
प्रतिमन्त्रं द्विपञ्चधा ।

अन्तोऽन्तकः, तद्दिक् दक्षिणा । यदुक्तं

'विद्याङ्गपञ्चकं पश्चादाग्नेय्यादिषु विन्यसेत् ।
अग्नीशरक्षोवायूनां दक्षिणे च यथाक्रमम् ॥' (मा०वि०८।७६)

इति । तथैव आग्नेय्यादिक्रमेण। अत्र द्वये इति शक्तिशिवाङ्गलक्षणे। चतुर्दिक्कमिति पूर्वं हि दक्षिणस्यामेव दिशीति व्यतिरेकार्थः । मध्ये लोचनसंज्ञकमिति सर्वशेषः। मिश्रितमिति यामलरूपतया। द्विश इति द्वौ वारौ, तेन द्वादशकस्य द्विगुणत्वे चतुर्विंशतिरित्यादिः क्रमः। सर्वश इति सर्वेण अष्टकाद्यात्मना प्रकारेण यत् यत् पूज्यं, तत् तत् द्विगुणरूपमेवेत्यर्थः । एतच्च

प्रागेव संवादितम्। साम्रानिति हस्तगतास्त्रान्। यदुक्तं

‘ लोकपाला भवन्त्येवं ह्रस्वास्त्राः संप्रकीर्तिताः ।
तेषां हस्तगताः पूज्या........................ ॥ ’

इति। त्रिशूलपर्यन्तदेवीति विश्रान्तिस्थानत्वात् मातृसद्भावरूपा । द्विपञ्चधेति दशधा ॥

एतदेव व्याप्तिमुखेन अपि घटयति

एकैकस्य त्र्यात्मकत्वा-
दभेदाच्चापि सर्वशः ॥३५८॥

एकैकस्मिन्मन्त्रे त्रितयं प्रत्येकमन्तःकृतत्रितयमस्तीति प्रतिमन्त्रं सार्वात्म्यात् नवत्वं स्वरूपस्थित्यविभागात्मना च एकत्वमिति दशधात्वम् ॥ ३५८ ॥

नाभिहृत्कण्ठताल्वूर्ध्व-
कुण्डे ज्वलनवत्स्मरन् ।
मन्त्रचक्रं तत्र विश्वं
ज्वह्लन्संपादयेद्धुतिम् ॥३५९॥
दीक्षाकर्मणि कर्तव्ये
दीक्षां येनाध्वना गुरुः ।

चिकीर्षुर्देह एवादौ
　　भूयस्तं मुख्यतोऽर्पयेत् ॥ ३६० ॥

ज्वलनवदिति अतिदीप्ततया । तदुक्तं

'........................जपं पश्चात्समारभेत् ।
स्वरूपे तल्लयो भूत्वा एकैकां दशधा स्मरेत् ॥
ज्वलत्पावकसंकाशां ध्यात्वा स्वाहान्तमुच्चरेत् ।
सकृदेकैकशो मन्त्री होमकर्मप्रसिद्धये ॥' (मा०वि०८।७८)

इति । दीक्षाकर्मणीति नतु नित्यमात्रे । येनेति तत्त्वाद्यन्यतमेन । तमिति शोध्यतया अभिमतमध्वानम् ॥ ३६० ॥

ननु एवं कृते किं स्यादित्याशङ्क्य आह

द्वादशान्तमिदं प्राग्र्यं
　　त्रिशूलं मूलतः स्मरन् ।
देवीचक्राग्रगं त्यक्त-
　　क्रमः खेचरतां व्रजेत् ॥ ३६१ ॥
मूलाधाराद्द्विषट्कान्त-
　　व्योमाग्रापूरणात्मिका ।
खेचरीयं खसंचार-
　　स्थितिभ्यां खामृताशनात् ३६२

इदमुक्तसतत्त्वं मूलाधारादारभ्य द्वादशान्तं यावदतितीक्ष्णमूलप्रान्तकोटिविनिविष्टदेवीचक्रं त्रिशूलमनुध्यायन् निरावरणपदविश्रान्त्या त्यक्तक्रमः खेचरतां व्रजेत् परबोधगगनचारी भवेदित्यर्थः। यदियमेव मूलाधारादारभ्य तालुभ्रूमध्यब्रह्मरन्ध्रलक्षणेषु खेषु सम्यक् दण्डाकारतया ऊर्ध्वचरणात्, तत्रैव निरोधात्मना च अवस्थानेन द्वादशान्ते चतुश्चतुरङ्गुलीनव्याप्त्या स्थितानां शक्तिव्यापिनीसमनात्मनां व्योम्नामापूरणात्मिका तदैकात्म्यमापन्ना, अत एव खामृतस्य परबोधानन्दस्य चरेर्भक्षणार्थतया चरणात् खेचरी तदाख्या महामुद्रा इत्यर्थः। यदुक्तं

'बद्ध्वा पद्मासनं योगी नाभावक्षेश्वरं न्यसेत्।
दण्डाकारं तु तं तावन्नयेद्यावत्कखत्रयम्॥
निगृह्य तत्र तत्तूर्णं पूरयेत्खत्रयेण तु।
एतां बद्ध्वा महावीरः खे गतिं प्रतिपद्यते॥' (मा०वि०७।१५)

इति। अतश्च इत्थं त्रिशूलव्याप्तिमजानानस्य खेचरीमुद्राबन्धेऽपि नैव परस्वरूपलाभो भवेदिति अत्र तात्पर्यम्। यदुक्तं

'इत्थमेतदविज्ञाय शक्तिशूलं वरानने ।
बद्ध्वापि खेचरीं मुद्रां नोत्पतत्यवनीतलात् ॥'(मा०वि०८।८१)

इति ॥ ३६२ ॥

अत्रैव देवीत्रयप्राधान्येन अपि व्याप्तिं दर्शयति

अमुष्माच्छाम्भवाच्छूला-
ह्रासयेच्चतुरङ्गुलम् ।
शाक्ते ततोऽप्याणवे त-
त्रिशूलत्रितयं स्थितम् ॥ ३६३ ॥

अमुष्मादिति पराप्राधान्येन द्वादशान्तावस्थितात्, शाक्ते इति ब्रह्मरन्ध्रादष्टाङ्गुलान्तव्याप्तिके परापराप्रधाने, ततोऽपि आणवे तत् चतुरङ्गुलं ह्रासयेदिति संबन्धः । तेन ब्रह्मरन्ध्रोपरि चतुरङ्गुलान्तमपराप्रधानमाणवं शूलम् । तदुक्तं

'इत्येतच्छाम्भवं प्रोक्तमष्टान्तं शाक्तमिष्यते ।
तुर्यान्तमाणवं विद्यादिति शूलत्रयं मतम् ॥'(मा०वि०८।८२)

इति ॥ ३६३ ॥

एवमपि अस्य किं स्यादित्याशङ्क्य आह

तत्त्रिशूलत्रयोर्ध्वोर्ध्व-
देवीचक्रार्पितात्मकः ।
किं किं न जायते किं वा
न वेत्ति न करोति वा ॥३६४॥

किं किं न जायते इति विश्वात्मक एव संपद्यते इत्यर्थः ॥ ३६४ ॥

अत्रैव पृथग्यागे विशेषान्तरमाह

एकैकामथवा देवीं
मन्त्रं वा पद्मगं यजेत् ।
यामलैक्याङ्गवक्त्रादि-
सदसत्ताविकल्पतः ॥ ३६५ ॥

मन्त्रमिति नवात्माद्यन्यतमम् । तच्च अत्र पद्मं दलव्याप्तपार्श्वाराद्वयमासनत्वेन चिन्त्यम् । यागश्च अत्र यामलक्रमेण, एकवीरतया वा, अङ्गवक्त्रादियोगेन, तदयोगेन वा,—इति विकल्पार्थः॥

एवं

'............शिवो भूत्वा शिवं यजेत् ।'

इत्यादिदृशा प्राणादावात्मनि शिवीभावं भावयित्वा बाह्ययागं कुर्यादित्याह

इत्थं प्राणाद्व्योमपद-
पर्यन्तं चेतनं निजम् ।
शिवीभाव्यार्चनायोगा-
त्ततो बाह्यं विधिं चरेत्॥३६६॥

इत्थमिति अन्तर्यागक्रमेण । व्योमेति शून्यम् ॥

ननु अन्तश्चेत् यागः कृतः, तत् किं बाह्येने-
त्याशङ्क्य आह

बहिर्यागस्य मुख्यत्वे
सिद्ध्यादिपरिकल्पिते ।
अन्तर्यागः संस्क्रियायै
ह्यन्यथार्चयिता पशुः॥३६७॥
यस्तु सिद्ध्यादिविमुखः
स बहिर्यजति प्रभुम् ।
अन्तर्महायागरूढ्यै
तयैवासौ कृतार्थकः ॥३६८॥

मुख्यत्वे हेतुः सिद्ध्यादिपरिकल्पते इति ।
संस्क्रियायै इति प्राणादेः । अन्यथेति यदुक्तं

'अकृत्वा मानसं यागं योऽन्यं यागं समारभेत्।
अशिवः स तु विज्ञेयो न मोक्षाय विधीयते ॥' (स्व० ३।३२)

इति। तथैवेति अन्तर्महायागरूढ्या। देहस्य हि न्यासादिना शिवीभावो वृत्तः, प्राणबुद्धि-शून्यानां तु अन्तर्यागेनेति किमवशिष्यते यद्ब-हिर्यागेन कार्यमिति ॥ ३६८ ॥

इह आरुरुक्षूणां बाह्यक्रमेण आन्तरीयवृत्ति-रूढिर्जायते इति क्षेत्रग्रहाद्युपक्रमं बाह्ययागं वक्तुमाह

कृत्वान्तर्यागमादाय
धान्याद्यस्त्रेण मन्त्रितम्।
दिक्षु क्षिपेद्विघ्ननुदे
संहृत्यैशीं दिशं नयेत्॥३६९॥
निरीक्षणं प्रोक्षणं च
ताडनाप्यायने तथा।
विगुण्ठनं च संस्काराः
साधारास्त्रिशिरोमते ॥ ३७० ॥
गोमूत्रगोमयदधि-
क्षीराज्यं मन्त्रयेन्मुखैः।

ऊर्ध्वान्तैरङ्गषट्केन
कुशाम्ब्वेतेन चोक्षयेत् ॥३७१

भूमिं शेषं च शिष्यार्थं
स्थापयेत्पञ्चगव्यकम् ।

पञ्च गव्यानि यत्रास्मि-
न्कुशाम्बुनि तदुच्यते ॥३७२॥

पञ्चगव्यं जलं शास्त्रे
बाह्याशुद्धिविमर्दकम् ।

लौकिक्यामविशुद्धौ हि
मृदितायामथान्तरीम् ॥३७३॥

अशुद्धिं दग्धुमास्थेयं
मन्त्रादि यदलौकिकम् ।

अत्र च

'तिला लाजा यवाश्चैव दूर्वाः सिद्धार्थकाः शुभाः ।
कुसुमानि च शुक्लानि ससुगन्धीनि भूरिशः ॥
ईषच्चन्दनपङ्केन मिश्रोऽयं विकिरः शुभः ।'

इति धान्यादि ज्ञेयम् । मन्त्रितमिति सप्तधा । यदुक्तं

'शिवाम्भसास्त्रयुक्तेन विकिराण्यभिमन्त्रयेत् ।
सप्तकृत्वोऽस्त्रमन्त्रेण स्थित्वा मध्ये तु प्राग्दिशः ॥
ऊर्ध्वाधो विकिरेद्धान्यान्यस्त्रभूतानि चिन्तयेत् ।
चामरेण सुशुभ्रेण अस्त्रमन्त्रेण संहरेत् ॥
ऐशान्यभिमुखान्येव नैर्ऋताद्यावदैश्वरम् ।'

इति । साधारा इति सर्वकर्मसु । संवादितं च एतत् स्नानप्रकरणे । मन्त्रयेदिति अर्थात् पृथक् पृथक् पात्रस्थम् । ऊर्ध्वान्तैरिति तेन गोमूत्रं सद्योजातेन, यावदीशानेन आज्यमिति क्रमः । एतेनेति गोमयादिसंयोजितेन । भूमिमित्यनेन पञ्चगव्यानन्तरं भूगणेशास्त्राणां पूजनमुपक्रान्तम् । पञ्चगव्यशब्दं व्युत्पादयति—पञ्च गव्यानीत्यादि । गोभ्यो हितानि गव्यानि पञ्च गव्यानि समाहृतानि विद्यन्ते यस्मिन् कुशाम्बुनि, तत् तथेति । आस्थेयमिति अनुसन्धातव्यमित्यर्थः ॥

अत एव आह

फादिनान्तां स्मरेद्देवीं
पृथिव्यादिशिवान्तगाम् ३७४

संहारक्रमस्य हि आन्तरीमशुद्धिं दग्धुमौचित्यमिति एवमुक्तम् ॥३७४॥

पुष्पाञ्जलिं क्षिपेन्मध्ये
　　धूपगन्धासवादि च ।
तथैव दद्याद्यागौको-
　　मध्ये तेनाशु विग्रहम् ॥३७५

समस्तं देवताचक्र-
　　मधिष्ठातृ प्रकल्प्यते ।
अनन्तनाले धर्मादि-
　　पत्रे सद्वैद्यकर्णिके ॥ ३७६ ॥

षडुत्थे गन्धपुष्पाद्यै-
　　र्गणेशं ह्यैशगं यजेत् ।
उत्थितं विघ्नसंशान्त्यै
　　पूजयित्वा विसर्जयेत्॥३७७॥

.... ...............
　　..................... ।
ततः कुम्भं परामोदि-
　　द्रवद्रव्यप्रपूरितम् ॥ ३७८ ॥

पूजितं चर्चितं मूल-
मनुना मन्त्रयेच्छतम् ।
असिना कर्करीं पूर्व-
मस्त्रयागो न चेत्कृतः ॥३८९॥
तमैशान्यां यजेत्कुम्भं
वामस्थकलशान्वितम् ।
ततः सौरदिगाश्रित्या
सास्त्रांल्लोकेश्वरान्यजेत्॥३८०॥
गन्धपुष्पोपहाराद्यै-
र्विधिना मन्त्रपूर्वकम् ।
ततः शिष्योऽसिकलशी-
हस्तो धारां प्रपातयन् ॥३८१
गुरुणा कुम्भहस्तेना-
नुव्रज्यो वदता त्विदम् ।
भो भोः शक्र त्वया स्वस्यां
दिशि विघ्नप्रशान्तये ॥३८२॥
सावधानेन कर्मान्तं
भवितव्यं शिवाज्ञया ।

त्र्यक्षरे निर्ऋतिप्राये
नाम्नि भोःशब्दमेककम् ३८३
अपासयेद्यतो मन्त्र-
श्छन्दोबद्धोऽयमीरितः ।
तत ऐश्यां दिशि स्थाप्यः
स कुम्भो विकिरोपरि ॥३८४
दक्षिणे चास्त्रवार्धानी
स्थाप्या कुम्भस्य सांप्रतम् ।

दद्यादित्यत्र च्छेदः । तेनेति पुष्पाञ्जलिक्षेपादिना हेतुना । तदुक्तं

'वास्तुयागं ततः कुर्यान्मालिन्युच्चारयोगतः ।
पुष्पैरञ्जलिमापूर्य फकारादि समुच्चरन् ॥
ध्यात्वा शक्त्यन्तमध्वानं नकारान्ते विनिक्षिपेत् ।' मा.वि.८।८९

इति । सद्वेद्यकर्णिके इति सती शुद्धविद्यैव वेद्यं कर्णिका यत्र तस्मिन्विद्यापद्मरूपे इत्यर्थः । षडुत्थे इति । यदुक्तं

'दत्त्वानन्तं तथा धर्मं ज्ञानं वैराग्यमेव च ।
ऐश्वर्यं कर्णिकां चेति षडुत्थमिदमासनम् ॥'(८।९३)

इति । ऐशगामिति

'..................... ऐशीं दिशं नयेत् ।' (३६९)

इति तत्रैव कर्मणः प्रक्रान्तत्वात्। उत्थितमिति विघ्नौघनिवारणोद्युक्तत्वात्। तदुक्तं

'ग्लौं' इत्यनेन विघ्नेशं गन्धधूपादिभिर्यजेत्।
तस्याङ्गानि गकारेण षड्दीर्घह्रस्वयोगतः॥
त्रिनेत्रमुदितं ध्यात्वा गजास्यं वामनाकृतिम्।' (८।९२)

इति। सिद्धिकामस्येति न मुमुक्षोः। यदुक्तं

'......सिद्धिकामस्तु महास्त्रमनुपूजयेत्।' (८।९२)

इति। आशेति आशासु सास्त्रेण मात्रष्टकेन आवृतं युक्तमित्यर्थः। तदुक्तं

'अस्योपरि न्यसेद्ध्यात्वा खड्गखेटकधारिणम्।
विकरालं महादंष्ट्रं महोग्रं भ्रुकुटीमुखम्॥
स्वाङ्गषट्कसमोपेतं दिङ्मातृपरिवारितम्।
स्वार्णैरेवाङ्गषट्कं तु फट्कारपरिदीपितम्॥
तद्रूपमेव संचिन्त्य ततो मात्रष्टकं न्यसेत्।
इन्द्राणीं पूर्वपत्रे तु सवज्रां युगपत्स्मरेत्॥
आग्नेयीं शक्तिहस्तां च याम्यां दण्डकरां ततः।
नैर्ऋतीं वारुणीं चैव वायवीं च विचक्षणः॥
खड्गपाशध्वजैर्युक्तां चिन्तयेद्युगपत्प्रिये।
कौवेरीं मुद्गरकरामीशानीं शूलसंयुताम्॥' (८।९८)

इति। पश्चादिति अस्त्रयागस्य। होमोऽपि अत्र तत्संख्याक एव अर्थाक्षिप्तः। यदुक्तं

'आदौ च कलशं कुर्यात्सहस्रादिकमन्त्रितम् ।
सहस्रं होमयेत्तत्र ततो जप्त्वा विसर्जयेत् ॥
शतमष्टोत्तरं पूर्ण........................ ।' (८।१००)

इति। तत इति अस्त्रकलशपूजाद्यनन्तरम्। परामोदीति अनेन प्राधान्यात् मताद्युक्तम् । चर्चितमिति चूतपल्लवादिभिः । असिना कर्करीं शतं मन्त्रयेदिति संबन्धः । तदुक्तं

'तत्रादौ कुम्भमादाय हेमादिमयमव्रणम् ।
सर्वरत्नौषधीगर्भं गन्धाम्बुपरिपूरितम् ॥
चूतपल्लववक्त्रं च स्रक्सूत्रकृतकण्ठकम् ।
रक्षोघ्नतिलकाक्रान्तं सितवस्त्रयुगावृतम् ॥
शताष्टोत्तरसंजप्तं मूलमन्त्रप्रपूजितम् ।
वार्धान्यपि तथाभूता किंतु सास्त्रेण पूजिता ॥' (८।१०२)

इति । न चेत्कृत इति मुमुक्षुविषये । तत्र हि तदेव कर्करीत्वेन पूज्यं भवेदिति भावः । वामस्थकलशेति । यदुक्तं

'वामभागे तु कुम्भस्य................ ।' (स्व०३।७७)

इत्यादि उपक्रम्य

'संप्रोक्ष्य च शिवाम्भोभिर्वार्धानीं मङ्गलान्विताम् ।
कुम्भवच्चर्चयित्वा तमासनस्योपरि न्यसेत् ॥' (स्व०३।७८)

इत्यन्तम् । धारां प्रपातयन्निति सौरदिगाश्रित्या पूर्वादिक्रमेण । इदमिति वक्ष्यमाणम् । निर्ऋ-

तिप्राये इति तेन नैर्ऋते भोरित्यादि पठनीयम्। छन्दोबद्ध इति छन्दोभङ्गे हि मन्त्र एव अयं न भवेदिति भावः। दक्षिणे इति कुम्भस्य। तदुक्तं

'नीत्वा तत्रासने पूर्वं मूर्तिभूतं घटं न्यसेत्।
तस्य दक्षिणदिग्भागे वार्धानीं विनिवेशयेत्॥' (८।१०७)

इति॥

ननु एवं कुम्भपूजनेन किं स्यादित्याशङ्क्य आह

कुम्भस्थाम्बुसमापत्ति-
बृंहितं मन्त्रवृन्दकम्॥३८५॥
तेजोमात्रात्मना ध्यातं
सर्वमाप्याययेद्विधिम्।
अतः कुम्भे मन्त्रगणं
सर्वं संपूजयेद्गुरुः॥ ३८६॥
पूर्वेण विधिनास्त्रं च
कर्कर्यां विघ्ननुद्यजेत्।
मध्येगृहं ततो गन्ध-
मण्डले पूजयेद्गुरुः॥ ३८७॥

त्रिकं यामलतैक्याभ्या-
मेकं वा मन्त्रदैवतम् ।

सर्वं विधिमिति वक्ष्यमाणम् । अत इति सर्व-विध्याप्यायकारित्वात् । पूर्वेण विधिनेति षोढा-न्यासादिना । मध्येगृहमिति गृहमध्ये ब्रह्मस्थाने इत्यर्थः । तदुक्तं

'गन्धमण्डलकं कृत्वा ब्रह्मस्थाने विचक्षणः ।
तत्र संपूजयेत्षट्कं त्रिकं वाप्येकमेव वा ॥' (८।१०९)

इति ॥

इदानीं वह्निकार्यमभिधातुमुपक्रमते

अग्निकार्यविधानाय
ततः कुण्डं प्रकल्पयेत् ॥३८८॥
शुद्धमन्त्रादिसंजल्प-
संकल्पोत्थमपूर्वकम् ।

एवं मण्डलपूजानन्तरमग्निकर्म विधातुमद्व-यमयतया शुद्धस्य अत एव मन्त्रादिरूपस्य

'क्रिया कुण्डलिनी कुण्डं.................. ।'

इत्याद्यनुसंध्यात्मनः संजल्पस्य प्ररोहात्मकात्

संकल्पादुत्थितम् । अत एव अलौकिकत्वादपूर्वं कुण्डं प्रकल्पयेत् बहिरेवमनुसन्दध्यादित्यर्थः॥

ननु सर्वत्रैव कुण्डस्य उल्लेखसेककुट्टनाद्यात्मना संस्कारजातेन बहिः प्रकल्पनमुक्तम्, इह पुनरेवं कस्मादभिधीयते इत्याशङ्क्य आह

शिवस्य या क्रियाशक्ति-
स्तत्कुण्डमिति भावनात् ३८९
परमः खलु संस्कारो
विनाप्यन्यैः क्रियाक्रमैः ।

एतदेव अन्यत्र अपि अतिदिशति

एवं देहे स्थण्डिले वा
लिङ्गे पात्रे जलेऽनले ॥३९०॥
पुष्पादिषु शिशौ मुख्यः
संस्कारः शिवतादृशे ।

किमत्र प्रमाणमित्याशङ्क्य आह

उक्तं श्रीयोगसंचारे
तथाहि परमेशिना ॥ ३९१ ॥

तदेव पठति

चतुर्दशविधे भूते
पुष्पे धूपे निवेदने ।
दीपे जपे तथा होमे
सर्वत्रैवात्र चण्डिका ॥३९२॥

जुहोति जपति प्रेङ्खे
पूजयेद्विहसेद्व्रजेत् ।
आहारे मैथुने सैव
देहस्था कर्मकारिणी ॥३९३॥

प्रेङ्खे इति दीप्यते इत्यर्थः । एवं परैव संवित् तेन तेन रूपेण परिस्फुरतीति सर्वत्र अनुसन्धातव्यमिति अत्र तात्पर्यम् ॥ ३९३ ॥

येषां पुनरेवं संवित्प्ररोहो नास्ति, तान्प्रति अयं बाह्यः क्रियाक्रम इत्याह

तादृशीं ये तु नो रूढां
संवित्तिमधिशेरते ।
अक्रमात्तत्प्रसिद्ध्यर्थं
क्रमिको विधिरुच्यते ॥३९४॥

एवं चैषां सिद्धिः स्यादित्याह

अहं शिवो मन्त्रमयः
संकल्पा मे तदात्मकाः।
तज्जं च कुण्डवह्न्यादि
शिवात्मेति स्फुटं स्मरेत् ३९५
अत एव हि तत्रापि
दार्ढ्यादार्ढ्यावलोकनात्।
क्रियमाणे कृते वापि
संस्क्रियाल्पेतरापिवा ॥३९६॥

तत्रापीति क्रमिके विधौ। अल्पतरेति। उक्तं च एतत् प्राक्

'क्रियया सिद्धिकामो यः स क्रियां भूयसीं चरेत्।' (१४३)

इत्यादि बहुप्रकारम् ॥ ३९६ ॥

एतदेव दृष्टान्तमुखेन हृदयङ्गमयति

यथाहि कश्चित्प्रतिभा-
दरिद्रोऽभ्यासपाटवात्।

वाक्यं गृह्णाति कोऽप्यादौ
तथात्राप्यवबुध्यताम् ॥३९७॥

तत्र कुण्डस्य तावत्संस्कारानाह

उल्लेखसेककुट्टन-
लेपचतुर्मार्गमक्षवृतिपरिकलनम् ।
स्तरपरिधिविष्टरस्थिति-
संस्कारा दशास्त्रतः कुण्डगताः ॥३९८

उल्लेखः खननम् । सेक आप्यायनम् । कुट्टनं निविडतापादनम् । लेपः समीकरणम् । समध्यग्रन्थि दार्भमासनं विष्टरः ॥ ३९८ ॥

अन्यत् स्वयमेव विषमत्वात् व्याचष्टे

मध्यग्रहणं दर्भ-
द्वयेन कुशसंवृतिश्च भित्तीनाम् ।
प्राङ्मुखरेखात्रितयो-
र्ध्वरेखिकाः कुशसमावृतिश्च बहिः ॥

शस्तलताश्चतुरश्रं
दशलोकेशार्चनासनविधिश्च ।
सङ्ग्रासादनमस्त्रा-
ग्नितेजसा रक्षणं च कुण्डस्य ४००

भूमेः शिवाग्निधृत्यै
शक्तिर्विघ्नापसारणं चार्थाः ।
ततस्तु पूजिते कुण्डे
क्रियाशक्तितया स्फुटम् ॥ ४०१ ॥

मातृकां मालिनीं वापि
न्यस्येत्संकल्परूपिणीम् ।

दर्भद्वयेन प्रागुदङ्मुखेन चतुष्पथाकारेण चतुर्मार्गम् । कुण्डभित्तीनामन्तरूर्ध्वमुखैः कुशैः परितः संवरणमक्षवाटः । कुशाग्रेण पूर्वापरायत-रेखात्रयमध्ये दक्षिणोत्तरायता रेखा वज्रीकरणम् । कुण्डबाहिस्तेजःपुञ्जमयैः कुशैरास्तरणं स्तरः । पूर्वादिदिक्पूज्यानां ब्रह्मविष्णुसदाशिव-शिवानामाधारशक्तिरूपाः शस्ता यज्ञकर्मवृक्षो-

स्था हस्तमात्राः सत्वचश्चतस्रः शाखाः परिधयः । तत्र द्वे पूर्वानने, द्वे सौम्यानने याभिः कुण्ड-वहिश्चतुरश्रसंनिवेशो जायते । एषां यथायोगं प्रयोजनमाह दशेत्यादि । लोकेशेति उपलक्षणं, तेन ब्रह्मादीनामपि । तदुक्तं

'..................ब्रह्माणं पूर्वविष्टरे ।' (स्व० २।२२०)

इति । सद्मासादनमिति वागीश्या हि गुप्त्यर्थ-मववरकप्रायमक्षवाटेन गृहं परिकल्प्यते इत्ये-तदस्य प्रयोजनम् । रक्षणमिति अस्त्रमन्त्रस्य । शिवाग्निधृत्यै शक्तिरिति उल्लेखादीनां चतुर्णां वज्रीकरणस्य च । विघ्नापसारणं स्तराणाम् । दशेत्यनेन निरीक्षणादीनां पञ्चानां संस्काराणां नेह परिगणनमिति कटाक्षितम् । ते हि सर्व-कर्मसु साधारणा इति उक्तम् । पूजिते इति ओं क्रियाशक्त्यात्मने कुण्डाय नमः इति प्रयो-गेण । संकल्परूपिणीमिति वागीश्वरीरूपाम् ॥

अत एव आह

संकल्पदेव्या यत्सृष्टि-
धाम त्र्यश्रं क्रियात्मकम् ॥४०२॥

ज्ञानशुक्रकणं तत्र
त्रिः प्रक्षोभ्य विनिक्षिपेत् ।

साच अर्थादृतुमती । तदुक्तं

'नीलोत्पलदलाभासामृतुमच्चारुलोचनाम् ।
ध्यात्वा चैवंविधां देवीं स्थापयेत्कुण्डमध्यतः ॥'

इति । तन्न्यासे च ओं ह्रीं भगवति मालिनि इदं स्थानमधितिष्ठ नमः इति, ओं भगवन् शब्दराशे इदं स्थानमधितिष्ठ नमः इति च प्रयोगः । त्र्यश्रं सृष्टिधामेति वह्निजननानुगुण्यादुक्तम् । त्रिः प्रक्षोभ्येति कुण्डबाह्ये योनिक्षोभार्थम् । यदुक्तं

'.................विद्यायां ह्रीमिति न्यसेत् ।
शिवमोमिति विन्यस्य संपूज्य द्वितयं पुनः ॥
ताम्रपात्रे शरावे वा आनयेज्जातवेदसम् ।
शिवशुक्रमिति ध्यात्वा विद्यायोनौ विनिक्षिपेत् ॥' (८।११३)

इति । तथा

'ध्रुवेण कुण्डबाह्ये तु त्रिधा भ्राम्यावतारयेत् ।'

इति ॥

एतदेव व्याप्तिगर्भीकारेण प्रपञ्चयति

इच्छातः क्षुभितं ज्ञानं
　　विमर्शात्मक्रियापदे ॥ ४०३ ॥
रूढं ज्ञत्वादिपञ्चाङ्ग-
　　विस्पष्टं जाज्वलीत्यलम् ।

इह परानन्दोल्लासचमत्कारमयादौत्सुक्यात् जातक्षोभं सत् ज्ञानं स्वविमर्शनमात्रसारायां स्वातन्त्र्यलक्षणायां क्रियायां विश्रान्तं

'सर्वज्ञः सर्वकर्ता च व्यापकः परमेश्वरः ।
स एवाहं शैवधर्मा इति दार्ढ्याच्छिवो भवेत् ॥'

इति भङ्ग्या सर्वज्ञत्वादिभिरनन्तशक्तित्वस्य स्वतन्त्रतयैव स्वीकारात् पञ्चभिर्गुणैर्विस्पष्टं जाज्वलीति सर्वपरप्रमातृतयैव प्रस्फुरतीत्यर्थः । अथच परस्पराभिषङ्गानुबन्धिनोऽभिलाषादुल्लसितं वीर्यरूपं संकल्परूपिण्या वागीश्वर्याः क्रियात्मके सृष्टिधामनि अलं प्राप्तप्ररोहं सत् सर्वज्ञत्वादिरूपैः पञ्चभिर्विद्याङ्गैः संस्कार्यतया परामृष्टं जाज्वलीति गर्भाधानक्रमेण नामकरणपर्यन्तं बहिः सिद्धिमियादित्यर्थः ॥

अत एव आह

तेनाङ्गपञ्चकैरेव

हुतिं दद्यात्सकृत्सकृत ॥४०४॥

जन्माद्यखिलसंस्कार-

शुद्धोऽग्निस्तावता भवेत् ।

जन्मादीति जन्मन आदिर्गर्भाधानादिरखिलसंस्कारस्तच्च आदिर्यस्य नामकरणादेरिति एकशेषः, तेन गर्भाधानपुंसवनसीमन्तोन्नयनजातकर्मनामकरणाख्यस्य संस्कारपञ्चकस्य अनेन सिद्धिरिति । तदुक्तं

'ततस्त्वाहुतयः पञ्च विद्याङ्गैरेव होमयेत् ।
जननादि ततः कर्म सर्वमेवं कृते कृतम् ॥' (८।११४)

इति ॥

ननु एतावतैव कथमेवं स्यादित्याशङ्क्य आह

पञ्चाङ्गमेव पृथ्व्यादि-

रूपं कठिनतादिकाः ॥४०५॥

शक्तीर्दधद्वह्निगताः

कुर्याद्गर्भादिकाः क्रियाः ।

ननु अन्येऽपि वक्त्राभिघारादयः संस्कार-विशेषा अवशिष्यन्ते इति किमिह ते न उक्ता इत्याशङ्क्य तत्पूर्णतासंपत्त्यर्थमाह

ततोऽखिलाध्वसद्देवी-
चक्रगर्भां परापराम् ॥४०६ ॥
स्मरन्पूर्णाहुतिवशा-
त्पूरयेदग्निसंस्क्रियाः ।

पूरणे हेतुरखिलाध्वसद्देवीगर्भामिति ॥

एवं संस्कृतेऽग्नौ शिवत्वमापादयितुमाह

तथा मन्त्रेशयुक्सत्य-
संकल्पमहसा ज्वलन् ४०७
वह्निस्तच्छिवसंकल्प-
तादात्म्याच्छिवतात्मकः ।

तथा पूर्वोक्तेन प्रकारेण मन्त्रैरीशेन च युक्तस्य तदैक्यमापन्नस्य आचार्यस्य यः संकल्पितार्थसंपत्त्या सत्यः शिवो भवति एवमात्मा संकल्पः, तस्य महसा माहात्म्येन ज्वलन् यथा-यथमुत्कर्षासादनेन दीप्यन् वह्निस्तेन संकल्प्य-

मानेन शिवेन तादात्म्याच्छिवात्मकस्तद्धर्मैव भवेदित्यर्थः ॥

एतच्च अस्माभिर्गुरुपरम्परोपनतमभिहितमिति विवेचनयोग्यमित्याह

इत्येतत्संस्क्रियातत्त्वं
श्रीशंभुर्मे न्यरूपयत् ॥४०८॥
मयापि दर्शितं शुद्ध-
बुद्धयः प्रविविञ्चताम् ।

अत एव अत्र विप्रतिपन्ना दूरं निरस्ता इत्याह

तेनात्र ये चोदयन्ति
यथा बालस्य संस्क्रिया ॥४०९॥
वह्नौ वह्नेस्तथान्यत्रे-
त्यनवस्थैव संस्कृतेः ।
ते निरुत्थानविहता
नयेऽस्मिन्गुरुदर्शने ॥ ४१० ॥

अन्यत्रेति अन्यस्मिन् वह्नौ । अनवस्थेति अन्योऽपि हि वह्निः किमसंस्कृतः संस्कृतो वा ।

तत्र असंस्कृतत्वे अस्य होमायोग्यत्वम् । संस्कारोऽपि अस्य किं स्वत्र परत्र वा । स्वत्र चेत् प्रथममेव तथा अस्तु किं वह्न्यन्तरापेक्षणेन, परत्र तु पुनरेवं चिन्तायामपर्यवसानमेवेति । निरुत्थानविहता इति नहि अस्मिन्नये वह्न्यन्तरापेक्षा काचिदस्ति युज्यते वेति भावः ॥४१०॥

इदानीमनन्तरकरणीयमाह

जातेऽग्नौ संस्कृते शैवे
　शब्दराशिं च मालिनीम् ।
पितरौ पूजयित्वा स्वं
　शुद्धं धाम विसर्जयेत् ४११
शुद्धाग्नेर्भागमादाय
　चर्वर्थं स्थापयेत्पृथक् ।

एवमपि दृढप्रतिपत्तिपवित्रीकृतान्प्रति बाह्यसंस्कारनिरपेक्षतया वह्निं संस्कर्तुं युक्त्यन्तरमाह

अथवाग्नेः शिखां वाम-
　प्राणेनादाय हृज्जुषा ॥४१२॥

चिदग्निनैक्यमानीय
क्षिपेद्दक्षेण संस्कृताम् ।

शिखामिति अर्थादसंस्कृताम् । आदायेति पूरकभङ्ग्या । क्षिपेदिति रेचकयुक्त्या । संस्कृतामिति हृज्जुषा चिदग्निना सामरस्यापत्तेः । यदुक्तं

'ज्वलितस्याथवा वह्नेश्चितिं वामेन वायुना ।
आकृष्य हृदि संकुम्भ्य दक्षिणेन पुनः क्षिपेत् ॥
पूर्णां च पूर्ववद्दद्याच्छिवाग्नेरपरो विधिः ।' (८।११७)

इति ॥

ननु एवमभिधाने कोऽभिप्राय इत्याशङ्क्य आह

शिव इत्यभिमानेन
दृढेन हि विलोकनम् ॥४१३॥
सर्वस्य संस्क्रिया तत्त्वं
तत्तस्मै यद्यतोऽमलम् ।

अत्रैव शास्त्रान्तरपक्षमपि आह

नवाहुतीरथो दद्या-
न्नवात्मसहितेन तु ॥ ४१४ ॥

शिवाग्नये तारपूर्वं
स्वाहान्तं संस्क्रिया भवेत् ।
शिवचैतन्यसामान्य-
व्योपरूपेऽनले ततः ॥४१५॥
प्राग्वदाधारमाधेयं
देवीचक्रं च योजयेत् ।

तारः प्रणवः । तत इति एवं संस्कारानन्तरम् ॥

ननु अग्नावेव संस्कारहोमः स्रुवादिभिः कार्यः, तत् प्रथममेषामेव संस्कारः कस्मात् न कृत इत्याह

स्रुवं स्रुचं च संपश्ये-
दधोवक्त्रौ क्रमाद्गुरुः ॥ ४१६ ॥
शिवशक्तितयाभ्यर्च्यौ
तथेत्थं संस्क्रियानयोः ।

संपश्येदिति परदृष्ट्या । एतच्च प्रोक्षणादीनां चतुर्णामपि उपलक्षणं, ते हि सर्वकर्मसु साधारणा इत्युक्तम् । अधोमुखाविति स्रष्ट्युन्मुखता-

भिप्रायेण । इत्थमिति अधोवक्रतया संदर्शनादिक्रमेण । तदुक्तं

'..................स्थापयेत्तावधोमुखौ।' (स्व० २।२३१)

इति,

'..................स्रुक्शक्तिस्तु स्रुवः शिवः।'

इति ॥

ननु अनयोरन्यत्र बहुप्रकारं संस्कारजातमुक्तं, श्रीपूर्वशास्त्रे पुनस्तन्नामापि न स्पृष्टं येन निरीक्षणाभ्यर्चनमात्रमेव तत्संस्कारनिमित्तमिह उक्तमिति किमेतदित्याशङ्क्य आह

तत्त्वसंदर्शनान्नान्य-
त्संस्कारस्यास्ति जीवितम् ४१७
इति वक्तुं स्रुवादीशः
श्रीपूर्वे न समस्करोत् ।

इह स्रुक्स्रुवादीनां होमयोग्यत्वमाधातुं हि तत्र तत्र संस्कारजातमुक्तम् । तच्च एतावतैव सिद्धं किमनेन । अस्मद्दर्शने हि शिवतापत्तिरेव परमः संस्कारः। स च अर्घपात्रविप्रुट्प्रोक्षणादिनैव सिध्येदिति उक्तं प्राक् बहुशः। यदागमोऽपि

'कर्तव्या यस्य संशुद्धिरन्यस्याप्यत्र वस्तुनः ।
तस्यानेनैव मार्गेण प्रकर्तव्या विजानता ॥' (८।५१)

इति । एवमाज्यादावपि ज्ञेयम् । अतश्च अत्र शास्त्रान्तरादिह न किंचिदपि अपेक्षणीयमर्घपात्रविप्रुट्प्रोक्षणादिनैव संस्कारसिद्धेस्तदपेक्षाया एव अभावात् । अन्यथा हि सर्वमेव अपेक्षणीयमिति अपर्यवसितमेव अनुष्ठानं स्यात् । यदाहुः

'नच शास्त्रान्तरे कर्तुं युक्तं शास्त्रान्तरश्रुतम् ।
शास्त्रस्यान्यानपेक्षत्वात्पुंबुद्धिप्रभवं हि तत् ॥
सापेक्षत्वेऽप्यपेक्षैव मानं यावदपेक्षते ।
तावदेवान्यतः कार्यं नान्यत्स्यादनवस्थितेः ॥'

इति ॥

एवमग्निगमधिवसानमभिधाय तर्पणमाह

ततस्तिलैर्मृगीं मध्या-
नामाङ्गुष्ठवशाद्गुरुः ॥ ४१८ ॥
कृत्वा मूलं तर्पयेत
शतेनाज्यस्रुवैस्तथा ।
अङ्गवक्त्रं षडंशेन
शेषांश्चापि दशांशतः ॥४१९॥

सहस्रादिकहोमोऽपि
तृप्त्यै वित्तानुसारतः ।

मृगीं कृत्वेति । यदुक्तम्

'अङ्गुष्ठाग्रसमासक्ते मध्यानामे महेश्वरि ।
तर्जनी च कनिष्ठा च प्रोच्छ्रिते विरले कृते ॥
मृगी नाम महामुद्रा...................।'

इति । नच होमस्य शतिकत्वमेव नियम इत्याह सहस्रेत्यादि । अत एव तत्र तत्र

'...................वित्तशाठ्यं न कारयेत् ।'

इति उक्तम् ॥

ननु यदि शतिकेनैव होमेन तर्पणं सिध्येत्, तत् किं वित्तक्षयकारिणा सहस्रादिकेनेत्याशङ्क्य आह

सति वित्तेऽपि लोभादि-
ग्रस्तो बाह्यप्रधानताम् ॥४२०॥
प्रथयंश्चिद्गुणीभावा-
च्छक्तिपातं न विन्दति ।

बाह्यप्रधानतां प्रथयन्निति बाह्ये धनादावाग्रहात् । यथोक्तं

'विभवे सति यो लोभान्न कुर्याद्विधिविस्तरम् ।
नासौ फलमवाप्नोति जातुचित्परमेश्वरि ॥'

इति ॥

ननु एतावतैव शक्तिपातं न विन्दति,—इत्यत्र किं प्रमाणमित्याशङ्क्य आह

उक्तं स्वच्छन्दतन्त्रे त-
द्दीक्षितोऽपि न मोक्षभाक् ४२१

इह तावत् कृतमकृतं न भवतीति अविवादः। तत् सलोभादेर्दीक्षायां कृतस्य कर्मणः किं फलं स्यादित्याशङ्कते

ननु यत्तस्य दीक्षायां
कृतं कर्मास्य किं फलम् ।

एतदेव प्रतिविधत्ते

तत्राहुर्गमशास्त्रज्ञा
वामाशक्तिमयास्तदा ॥४२२॥
मन्त्रा बध्नन्ति तं सम्य-
ग्भवकारामहागृहे ।

तदेति बाह्यप्रधानतायां चिद्गुणीभावे सतीत्यर्थः ॥

ननु यदि एषां वामा शक्तिरेवं फलदायिनी, तदुदितापि ज्येष्ठा शक्तिः किं व्यर्थैव स्यादि-त्याशङ्क्य आह

या त्वनुग्राहिका शक्ति-
स्तेषां सा गुरुदीपिता ४२३
शोधयेत स्वशास्त्रस्थ-
निष्कामोल्लङ्घनक्रियाम् ।

या पुनस्तेषां वृत्तदीक्षाणामनुग्राहिका शक्तिः, सा गुरुणा कर्मयोगज्ञानैरुत्तेजिता सती स्वत्र दीक्षाद्यनुष्ठाननिमित्तमात्मीयतां प्रापिते शास्त्रे स्थितस्य विधिनिषेधात्मनः समयस्य निष्काम-मनिच्छापूर्वं क्रियमाणमुल्लङ्घनं शोधयेत, तथात्वेऽपि

'तस्मादकृतविघातात्कंचित्कालं पिशाचवरराजः ।
भूत्वा विमलात्मासौ व्रजति च समतां परेशेन ॥'

इत्यादिदृशा स्वरूपाभिव्यक्तिपर्यवसानैव स्यात् बाह्यप्रधानतया चिद्गुणीभावेन, वामाशक्त्य-धिष्ठाने तु मूलत एव स्वरूपस्य तिरोहित-त्वात् न किंचिदपि कुर्यादिति युक्तमुक्तं

'...लोभादिग्रस्तः शक्तिपातं न विन्दति ।' (४२१)

इति । उक्तं च प्राक्

'स हि भेदैकवृत्तित्वं शिवज्ञाने श्रुतेऽप्यलम् ।
नोज्झतीति दृढं वामाधिष्ठितस्तत्पशूत्तमः ॥
शिवेनैव तिरोभाव्य स्थापितो नियतेर्बलात् ।
कथंकारं पतिपदं प्रयातु परताश्रितः ॥' (१३।३१६)

इति ॥

एवं होमान्ते तत्पूर्णतासंपत्तये पूर्णाहुतिर्दातव्या,—इति तत्प्रयोगमाह

तत ऊर्ध्वाधरन्यासा-
दन्योन्यौन्मुख्यसुन्दरम् ४२४
स्रुक्स्रुवं शिवशक्त्यात्मा-
दायाज्यामृतपूरितम् ।
समचित्तप्राणतनु-
रैकात्म्यविधियोगतः ॥४२५॥
वामं स्रुग्दण्डगं हस्तं
दक्षिणं सोपयामकम् ।
कण्ठाधोगं विनिक्षिप्य
दृढमापीड्य यत्नवान् ॥४२६॥

अधः कुर्यात्स्रुचं प्राण-
मूर्ध्वोर्ध्वं संनियोजयन् ।
यावद्द्विषट्कपर्यन्ते
बोधाग्नौ चन्द्रचक्रतः ॥४२७॥
स्रुगग्रात्परमं ह्लादि
पतेदमृतमुत्तमम् ।
तावद्वह्नौ मन्त्रमुखे
वौषडन्तां हुतिं क्षिपेत् ४२८

ऊर्ध्वाधरन्यासादिति शिवशक्त्यात्मेति च यथायोगं, तेन स्रुगूर्ध्वं स्रुवः । यदुक्तं

'नाभिस्थाने स्रुचो मूलमुत्तानाग्रमुखं समम् ।
स्रुच्युपरि स्रुवं देवि कृत्वा चैवमधोमुखम् ॥'

इति । अत एव शक्तिशिवात्मकत्वादनयोरन्योन्यौन्मुख्यमुचितं येन प्रेक्षितफलसंपत्तिः। अत एव अन्योन्यौन्मुख्येन परस्परस्वरूपानुप्रवेशात् स्रुगेकगामित्वेऽपि अविशेषेण उक्तमाज्यामृतपूरितमिति। एवमेवंविधं स्रुक्स्रुवमादाय पराद्वयानुसन्धानादैकध्यापन्नदेहप्राणबुद्ध्यादिराचा-

र्यः स्रुग्वदुत्तानं वामं हस्तं स्रुचो दण्डमूलगं दक्षिणं च सोपयामं स्रुववदधोमुखं स्रुवस्यैव कण्ठादधो वेदिकाकारमग्रपीठं गतं तत्प्रान्तश्लिष्टं कृत्वा एवंसंनिवेशाभ्यां हस्ताभ्यां दृढमापीड्य यत्नवान् सावधानः प्राणं हृदयादारभ्य ऊर्ध्वोर्ध्वं सम्यक् तत्तत्पदोल्लङ्घनक्रमेण नियोजयन्नाज्यधारापातमनुसन्धाय स्रुचं शनैः शनैरधः कुर्यात् यावत् द्वादशान्तावस्थिते विश्वप्लोषकारिणि बोधाग्नौ चेतनालक्षणायाः स्रुचः परां काष्ठामधितिष्ठतश्चक्राकारतया परमं ह्लादि अत एव उत्तमममृतं पतेत् बोधाग्न्युपोद्बोधकतया प्रसरेत्, तावत् तदेकमयतानुसन्धानेन सर्वमन्त्राणां तत्तद्द्रव्यकवलीकारकरणतया मुखे बाह्ये वह्नौ तृप्त्याधायकतया वौषडन्तां हुतिं क्षिपेत् पूर्णाहुतिं दद्यादित्यर्थः । उपयाम ऊर्ध्वग्रन्थिर्ज्ञानखड्गतया प्रतीतो वेण्याकारो दार्भः संनिवेशः । यदाहुः

> 'दर्भाणां तालमानेन कृता षट्त्रिंशता दलैः ।
> सप्तजप्ता शिवास्त्रेण वेणी बोधासिरुत्तमः ॥'

इति ॥ ४२८ ॥

ननु एवमभिसन्धाने क इव अभिप्राय इत्या-शङ्क्य आह

य ऊर्ध्वे किल संबोधः
कुण्डे स प्रतिबिम्बितः ।
वह्निः प्राणः स्रुक्स्रुवौ च
स्नेहः संकल्पचिद्रसः ॥४२९॥
इत्थं ज्ञात्वादितः कुण्ड-
स्रुक्स्रुवाज्यमनून्भृशम् ।
द्वादशान्तविबोधाग्नौ
रुद्ध्वा पूर्णाहुतिं क्षिपेत् ४३०

यः किल ऊर्ध्वे स्थितः संबोधः, सोऽर्थादधः कुण्डे प्रतिबिम्बितो वह्निः, यश्च एवंविधः प्राणस्तौ स्रुक्स्रुवौ, यश्च एवं भेदपरामर्शात्मा चिद्रसः, स स्नेह इत्यनुसन्धाय प्रथमं कुण्डादीन् द्वादशान्तविबोधाग्नौ भृशं रुद्ध्वा बिम्बप्राये तत्र तत्र आरोहक्रमेण सामरस्यं प्रापय्य पूर्णाहुतिं क्षिपेत् यथा प्रतिबिम्बप्रायाणां बाह्यानामेषामधोऽध एव अवस्थितिः स्यात् ॥४३०॥

ननु बिम्बस्य ऊर्ध्वोर्ध्वमवस्थाने प्रतिबिम्बस्य अधोऽधः स्थितिर्भवेदिति कोऽयं नय इत्याशङ्कां गर्भीकृत्य दृष्टान्तयति

यथा यथा हि गगन-
मुत्पतेत्कलहंसकः ।
जले बिम्बं ब्रुडत्यस्य
तथेत्यत्राप्ययं विधिः ॥४३१॥

बिम्बमिति प्रतिबिम्बरूपम् ॥ ४३१ ॥

एवमनुसन्धाने प्रकारान्तरमाह

स्वाभाविकं स्थिरं चैव
द्रवं दीप्तं चलं नभः ।
माया बिन्दुस्तथैवात्मा
नादः शक्तिः शिवस्तथा ४३२

इत्थं व्याप्यव्यापकतो
विभेद्याभ्यन्तरान्तरम् ।
तदधःस्थानि पृथ्व्यादि-
मूलान्तानि तथा पुमान् ४३३

अविद्यारागनियति-
कालमायाकलास्तथा ।
अणुर्विद्या तदीशेशौ
सादाख्यं शक्तिकुण्डली ४३४
व्यापिनी समनोन्मन्यं
ततोऽनामानि योजयेत् ।
रेचकस्थो मध्यनाडी-
सन्धिविद्गुरुरित्यदः ॥४३५॥
प्रोक्तं त्रैशिरसे तन्त्रे
परयोजनवर्णने ।

इह खलु पारमेश्वरी स्वरूपगोपनाकारा मायाख्या शक्तिर्व्यापकत्वात् ज्ञत्वकर्तृत्वाद्यात्मकं स्वाभाविकं रूपं व्याप्य आच्छाद्य आस्ते इति एतत्संकोचितः सकलादिरात्मा व्यापकत्वात् स्थिरं पार्थिवं रूपमित्थं वक्ष्यमाणेन क्रमेण व्याप्ता आस्ते। बिन्दुश्च आप्यायकत्वात् द्रवमाप्यं, नादश्च दीप्तमाग्नेयं, स्पर्शप्रधाना शक्तिश्च

चलं वायवीयं, निरावरणत्वाच्छिवश्च नाभस-मिति । एतत्

‘ पृथिव्यापस्तथा तेजो वायुराकाशमेव च ।
पञ्चैतानि तु तत्त्वानि यैर्व्याप्तमखिलं जगत् ॥ ’

इत्यादिदृशा पृथिव्यादिशक्तिपर्यन्तपञ्चत्रिंशत्तत्त्वगर्भीकारेण मध्यनाडीसन्धिवित् तन्मर्मज्ञः, अत एव ऊर्ध्वरेचकस्थो गुरुः

‘............षट्त्यागात्सप्तमे लयः ।’ (स्व० ४।२६७)

इति भङ्ग्या तत्तत्पदोल्लङ्घनेन आभ्यन्तरादाभ्यन्तरमूर्ध्वमूर्ध्वं विभेद्य अनन्तरमनामनि अनाख्ये द्वादशान्तावस्थिते परमशिवे समनन्तरोक्तयुक्त्या योजयेदिति । एवं श्रीत्रिशिरोभैरवे योजनिकाप्रकरणे विभज्य उक्तम् ॥

एवमेतत् प्रसंगादभिधाय चरुसंसिद्धिं वक्तुमाह

ततः प्राक्स्थापितान्यस्त-
मन्त्रसंस्कृतवह्निना ॥४३६॥
चरुः साध्योऽथवा शिष्यै-
र्होमेन समकालकः ।

चरौ च वीरद्रव्याणि
लौकिकान्यथवेच्छया ॥४३७॥
चरुसिद्धौ समस्ताश्च
क्रिया हृन्मन्त्रयोगतः।
ततश्चरुं समादाय
गुरुराज्येन पूरिताम् ॥४३८॥
स्रुचं स्रुवं वा कृत्वैव
भुक्तिमुक्त्यनुसारतः।
देवानामथ शक्तीनां
यन्त्राणां तु त्रयं त्रयम् ॥४३९॥
सप्तमं मातृसद्भावं
क्रमादेकैकशः पठन्।
स्वा इत्यमृतवर्णेन
वह्नौ हुत्वाज्यशेषकम् ॥४४०॥
चरौ हेत्यग्निरूपेण
जुहुयात्तत्पुनः पुनः।

तत इति तर्पणानन्तरम् । अन्यस्तमन्त्रेति, यदुक्तं

‘आप्याश्चरुपुरोडाशाः पञ्चसंस्कारसंस्कृते ।
अनाहूतशिवे वह्नौ होमस्त्वावाहिते शिवः ॥’

इति । अतश्च शुद्धाग्नेरिति तत्र उक्तम् । साध्य इति स्वयमाचार्येण। होमेन समकालक इति शिष्याणां होमादावव्यग्रत्वात् । वीरद्रव्याणि सारादिरूपाणि । लौकिकानि क्षीरतण्डुलादिरूपाणि । इच्छयेति वीराणामवीराणां वा । समस्ताः क्रिया इति स्थाल्यादिग्रहणतदभिमन्त्रणदर्वीविघट्टनाद्याः। अमृतवर्णेनेति सवयोराप्यायकारित्वात् । अग्निरूपेणेति हस्य शिवाभिधायितया प्रमातृरूपत्वात् । पुनः पुनरिति इत्थं प्रत्याहुति प्रयोगः कार्य इत्यर्थः । एवं हि अग्नौ स्वा इति सोमभागः सोमात्मनि चरौ, हा इति अग्निभागश्च न्यस्तो भवेत् येन उभयमपि अग्नीषोमात्मकं संपद्यते इति । यच्छ्रुतिः

‘यो ह वै तद्धविरग्नीषोमाभ्यां जुहोति तस्यैतदमृतीभवति ।’

इति ॥

अत एव आह

भोज्यभोजकचर्वङ्ग्यो-
रित्थमेकानुसन्धितः ॥४४१॥
स्वाहाप्रत्यवमर्शात्स्या-
त्समन्त्रादद्वयं परम् ।

परमद्वयमिति अग्नीषोमैकात्म्यापत्तेः ॥

ननु एवं भोज्यभोजकयोः साम्यमेव उक्तं स्यादिति किमेतदित्याशङ्क्य आह

एष संपातसंस्कार-
श्चरोर्भोक्त्रा ह्यधिष्ठितः ४४२
भोग्यस्य परमं सारं
भोग्यं नर्नर्ति यत्नतः ।

परमं सारमिति भोग्यस्य भोक्तरि विश्रामात्, अत एव नर्नर्ति क्षोभात्मना परिस्फुरतीति उक्तम् ॥

संपातशब्दस्य अन्वर्थतां दर्शयति

सममेकानुसन्धाना-
त्पाततो भोक्तृभोग्ययोः ४४३

अन्योऽन्यत्र च संपाता-
त्संगमाच्चेत्थमुच्यते ।

अत्र तुल्यकालार्थत्वं च अवयवार्थः, संगमार्थत्वं तु समुदायार्थः ॥

एवं संस्कृतं चरुं षोढा विभजति

स्थण्डिले कुम्भकर्कर्यो-
र्भागं भागं निवेदयेत् ॥४४४॥
भागेनाग्नौ मन्त्रतृप्ति-
र्द्वयं शिष्यात्मनोरथ ।
इत्थं विहितकर्तव्यो
विज्ञाप्येशं तदीरितः ॥४४५॥
शक्तिपातक्रमाच्छिष्या-
न्संस्कर्तुं निःसरेद्बहिः ।
तत्रैषां पञ्चगव्यं च
चरुं दशनमार्जनम् ॥४४६॥
तस्य पातः शुभः प्राची-
सौम्यैशाप्योर्ध्वदिग्गतः ।

अशुभोऽन्यत्र तत्रास्त्र-
होमोऽप्यष्टशतं भवेत् ४४७
नेत्रमन्त्रितसद्वस्त्र-
बद्धनेत्राननचञ्चलान् ।
अनन्यहृदयीभूता-
न्बलादित्थं निरोधतः ॥४४८॥
मुक्तारत्नादिकुसुम-
संपूर्णाञ्जलिकान्गुरुः ।
प्रवेश्य स्थण्डिलोपाग्र
उपवेश्यैव जानुभिः ॥ ४४९ ॥
प्रक्षेपयेदञ्जलिं तं
तैः शिष्यैर्भावितात्मभिः ।
अञ्जलिं पुनरापूर्य
तेषां लाघवतः पटम् ॥४५०॥
दृशोर्निवारयेत्सोऽपि
शिष्यो झटिति पश्यति

उक्तं च

'हृदयेन चरोः सिद्धिर्याज्ञिकैः क्षीरतण्डुलैः ।
संपातं सप्तभिर्मन्त्रैस्ततः षड्भागभाजितम् ॥
शिवाग्निगुरुशिष्याणां वार्धानीकुम्भयोः समम् ।' (८।१२२)

इति । विज्ञाप्येति

'गुरुत्वेन त्वयैवाहमाज्ञप्तः परमेश्वर ।
अनुग्राह्यास्त्वया शिष्याः शिवशक्तिप्रचोदिताः ॥
तदेते तद्विधाः प्राप्तास्त्वमेषां कुर्वनुग्रहम् ।
मदीयां तनुमाविश्य येनाहं त्वत्समो भवे ॥ (९।३८)

इति । तदीरित इति कुरु एवमिति प्रोक्त इति । तत्रेति बहिः, दद्यादिति शेषः । तस्येति दशनमार्जनस्य । तत्रेति अशुभे । तदुक्तम्

'ऊर्ध्वाननं यदा तिष्ठेद्राज्यं मोक्षमवाप्नुयात् ।
अधोमुखे तु मरणं हृदयेन शतं हुनेत् ॥
पूर्वस्यां योगसंसिद्धिराग्नेय्यां व्याधिमादिशेत् ।
याम्यायां मरणं विद्यान्नैर्ऋत्यां कलहो भवेत् ॥
वारुण्यां धनसंपुष्टिर्वायव्योच्चाटनं भवेत् ।
सौम्यायां सिद्धिमाप्नोति मोक्षमीशानगोचरे ॥'

इति । अनेन च दन्तसंस्कार उक्तः । तैरिति एवं प्रवेशितैः प्रयोज्यकर्तृभिः । लाघवत इति यथा अस्य झटित्येव स्थण्डिलदर्शनं भवेदिति भावः ॥

एवमस्य किं स्यादित्याशङ्क्य आह

झटित्यालोकिते मात्र-
प्रभावोल्लासिते स्थले ॥४५१॥
तदावेशवशाच्छिष्य-
स्तन्मयत्वं प्रपद्यते ।

एतदेव दृष्टान्तोपदर्शनेन हृदयङ्गमयति

यथा हि रक्तहृदय-
स्तांस्तान्कान्तागुणान्स्वयम् ॥
पश्यत्येवं शक्तिपात-
संस्कृतो मन्त्रसन्निधिम् ।

स्वयमिति, नतु उपायान्तरापेक्षणेन, तथात्वे हि झटित्येव तद्दर्शनमस्य न स्यात् ॥

ननु लावण्यादयः कान्तागुणा दृश्या इति ताननुरक्तहृदयः पश्यतां नाम, मन्त्राः पुनरदृश्यत्वात् संनिहितत्वेऽपि कथमर्वाग्दृशां चक्षुरादीन्द्रियगोचरतामासादयेयुरित्याशङ्क्य आह

चक्षुरादीन्द्रियाणां हि
सहकारिणि तादृशे ॥४५३॥

सत्यत्यन्तमदृष्टे प्रा-
गपि जायेत योग्यता ।

चक्षुरादीन्द्रियाणां हि तादृशे शक्तिपातलक्षणे सहकारिणि सति प्रागत्यन्तमदृष्टेऽपि अनुभवसंस्काराभावाद्विकल्पस्य ज्ञानस्य अविषयेऽपि मन्त्रादौ दृशिक्रियाकरणायां योग्यता जायेत तथा संभावनीयमित्यर्थः ॥

किमत्र प्रमाणमित्याशङ्क्य आह

कृतप्रज्ञा हि विन्यस्त-
मन्त्रं देहं जलं स्थलम् ॥४५४॥
प्रतिमादि च पश्यन्तो
विदुः संनिध्यसंनिधी ।

एवं स्वसंवेदनमपि अपह्नुवानान्प्रति आह

न्यस्तमन्त्रांशुसुभगा-
त्किंचिद्भूतादिमुद्रिताः ॥४५५॥
त्रस्यन्तीवेति तत्तच्चि-
दक्षैस्तत्सहकारिभिः ।

लोके हि मन्त्रन्यासाविष्कृततेजःसौभाग्यादाचार्यादेर्भूतादिमुद्रिता जन्तवस्त्रस्यन्त इव दृश्यन्ते इति । एवं तेन शक्तिपातादिना सहकृतैरिन्द्रियैस्तस्य तस्य संनिधानासंनिधानादेश्चित् चेतनवदेवं भवेदित्यर्थः । इयता च मन्त्रावेशलक्षणः पार्यन्तिकसंस्कार उक्तः ॥

इदानीं शिवहस्तविधिमभिधत्ते

ततः स दक्षिणे हस्ते
दीप्तं सर्वाध्वपूरितम् ॥४५६॥
मन्त्रचक्रं यजेद्वाम-
पाणिना पाशदाहकम् ।
तं शिष्यस्य करं मूर्ध्नि
देहन्यस्ताध्वसंततेः ॥४५७॥
न्यस्येत्क्रमेण सर्वाङ्गं
तेनैवास्य च संस्पृशेत् ।

ननु एतत्प्रकृते श्रीपूर्वशास्त्रे न उक्तमिति कुत आनीतमित्याशङ्क्य आह

उक्तं दीक्षोत्तरे चैत-
ज्ज्वालासंपातशोभिना ॥४५८॥
दत्तेन शिवहस्तेन
समयी स विधीयते ।
सायुज्यमीश्वरे तत्त्वे
जीवतोऽधीतियोग्यता ४५९

ज्वालासंपातेति मन्त्रतेजःसांनिध्यात् । यदुक्तं

'शिवहस्ते विभुं ध्यात्वा मन्त्रग्रामं सुजाज्वलम् ।' (स्व० ३।१४२)

इति । ईश्वरे इति विद्यातत्त्वोर्ध्ववर्तिनि, नतु पृथ्वीतत्त्वाधःस्थिते कालाग्निरुद्रे तथाश्रुतेरदर्शनात् । अत्र च उद्द्योतकृदेव कृतश्रम इति किमिह तेन उक्तेन तत एव अवधार्यम् । अधीतिरध्ययनम् । तदुक्तं

'समयी संस्कृतो ह्येवं वाचनेऽस्यार्हता भवेत् ।
श्रवणेऽध्ययने होमे पूजनादौ तथैवच ॥
चर्याध्यानविशुद्धात्मा लभते पदमैश्वरम् ।' (स्व० ४।७९)

इति ॥ २५९ ॥

न केवलमेतदत्रैव उक्तं, यावदन्यत्रापीत्याह

श्रीदेव्यायामले तूक्त-
मष्टारान्तस्त्रिशूलके ।
चक्रे भैरवसन्नाभा-
वघोराद्यष्टकारके ॥ ४६० ॥
बाह्यापरे परानेमौ
मध्यशूलपरापरे ।
ज्वालाकुलेऽरुणे भ्राम्य-
न्मातृप्रणवभीषणे ॥ ४६१ ॥
चिन्तिते तु बहिर्हस्ते
संदष्टे समयी भवेत् ।
पाशस्तोभाद्यस्तु सद्य
उच्चिक्रमिषुरस्य तम् ॥४६२॥
प्राणैर्वियोजकं मूर्ध्नि
क्षिपेत्संपूज्य तद्बहिः ।
अनेन शिवहस्तेन
समयी भवति स्फुटम् ॥४६३॥

इह अघोराद्यष्टकाधिष्ठितारकस्य प्रत्यरं सर्वतः परिभ्रमत्फेंकाराविकरालस्य भैरवत्रयभूषितनाभेरराबाह्यनेमिलक्षणस्थानद्वयप्रतिबिम्बितापरापरादेवीकस्य सिन्दूरारुणस्य अत एव ज्वालाकुलस्य अष्टारस्य चक्रस्य अन्तर्मध्यशृङ्गावस्थितपरापरे त्रिशूले चिन्तिते बहिरन्तरेवंविधे हस्ते सम्यक् परश्रेयःप्रधानतया दृष्टे पाशस्तोभात्समयी भवेत् तावतैव अस्य समयदीक्षा सिध्येदित्यर्थः । न केवलमनेन समयदीक्षैव भवेत्, यावत् निर्वाणदीक्षापीत्याह यस्त्वित्यादि यः पुनरुत्क्रान्तुमिच्छुस्तं बहिः प्राणोचिते क्षेत्रादौ संपूज्य अस्य तमेव शिवहस्तं प्राणैर्वियोजकं मूर्ध्नि क्षिपेत् तत्संस्पर्शादेव अस्य सद्योनिर्वाणदीक्षा भवेदित्यर्थः । यदुक्तं तत्र

'अष्टारं चक्रमालिख्य नाभिनेमिसमन्वितम् ।
अरकैश्चान्तरालैश्च त्रिशूलोपरिलाञ्छितम् ॥'

इति उपक्रम्य

'.......................नाभिस्थं भैरवं न्यसेत्' ।

इति,

'अघोराद्यष्टकं पूज्यं..................... ।'

इति,

'अराष्टकस्थितास्तास्तु..................... ।'

इति,

'सिन्दूरारुणसंकाशा शूलस्था तु परापरा ।
अपरा तु परा देवी बाह्यनेमिसमाश्रिता ।'

इति,

'चक्रभैरवमध्यस्थं भ्रमणमरुणप्रभम् ।'

इति,

'करे ध्यात्वा महाचक्रं ज्वालामालासमाकुलम् ।
वामपादं न्यसेत्तत्र शूलदण्डे समन्ततः ।
अरकेषु च सर्वत्र युक्तं दक्षिणजानुना ।'

इति,

'दर्शनात्स्तंभमायाति स्पर्शनान्म्रियते ध्रुवम् ।'

इति च ॥ ४६३ ॥

ननु एवं समयित्वेन अस्य किं स्यादित्याशङ्क्य आह

तस्यैव भाविविधिव-
त्तत्त्वपाशवियोजने ।
पुत्रकत्वं स च परे
तत्त्वे योज्यस्तु दैशिकैः ४६४

स एव मन्त्रजातिज्ञो
जपहोमादितत्त्ववित् ।
निर्वाणकलशेनादौ
तत ईश्वरसंज्ञिना ॥ ४६५ ॥
अभिषिक्तः साधकः स्या-
द्भोगान्तेऽस्य परे लयः ।

भावीति षोडशाह्निकादौ । स इति पुत्रकः । स एवेति संमयी । भाविविधिवत् तत्त्वपाशवियोजने कृते सतीति अत्रापि संबन्धनीयम्, एवमुत्तरत्रापि । जातीति नमःस्वाहादीनाम् । निर्वाणेति निर्वाणदायी अत्र शिव उच्यते । साधकस्य हि शिवे योजनिकाया कृतायामपि सदाशिवपदे भोगार्थमवस्थानम्, अत एव आह भोगान्तेऽस्य परे लय इति ॥

एतैर्गुणैः समायुक्तो
दीक्षितः शिवशासने ॥४६६॥
चतुष्पात्संहिताभिज्ञ-
स्तन्त्राष्टादशतत्परः ।

दशतन्त्रातिमार्गज्ञ

आचार्यः स विधीयते ४६७

पृथिवीमादितः कृत्वा

निर्वाणान्तेऽस्य योजनाम् ।

अभिषेकविधौ कुर्या-

दाचार्यस्य गुरूत्तमः ॥४६८॥

एतैरिति मन्त्रतन्त्रज्ञत्वाद्यैः। निर्वाणान्ते इति परमशिवपदे, अधिकारार्थं पुनरपरशिवे शिवे अस्य अवस्थानम्। यदुक्तम्

'अधिकारार्थमाचार्ये परापरपदे स्थितिः ।
शिवत्वे साधकानां तु विद्यादीक्षां सदाशिवे ॥
पुत्रके परमे तत्त्वे समयिन्यैश्वरे तथा ।'

इति ॥ ४६८ ॥

ननु एवमभिहिते समयिनः किमुक्तं स्यादित्याशङ्क्य आह

एतैर्वाक्यैरिदं चोक्तं

समयी राजपुत्रवत् ।

सर्वत्रैवाधिकारी स्या-

त्पुत्रकादिपदत्रये ॥ ४६९ ॥

राजपुत्रो हि यथा राज्यादावधिकृतस्तथा अयमपि पुत्रकादौ समयी । समयिदीक्षापूर्वकमेव सर्वा दीक्षा उक्ताः ॥ ४६९ ॥

पुत्रकाचार्ययोरविशेषेऽपि परतत्त्वयोजनिका कथंचिद्भेदमभिधत्ते

पुत्रको दैशिकत्वे तु
तुल्ययोजनिको भवेत् ।
अधिकारी स न पुनः
साधने भिन्नयोजने ॥ ४७० ॥

स इति पुत्रकः । साधने इति दीक्षाप्रतिष्ठादौ यदर्थमेव आचार्यस्य परापरपदे स्थितिरभिहितेत्याह भिन्नयोजने इति ॥ ४७० ॥

ननु समयिनोऽपि पूर्वभाविनी लिङ्गोद्धारदीक्षा संभवति, तत् समयी राजपुत्रवदित्येव कस्मादिह उक्तमित्याशङ्क्य आह

एतत्तन्त्रे समय्यादि-
क्रमादाप्तोत्तरक्रियः ।
आचार्यो न पुनर्बौद्ध-
वैष्णवादिः कदाचन ॥४७१॥

एवं प्रसङ्गान्निर्णीतं
प्रकृतं तु निरूप्यते ।
शिवहस्तविधिं कृत्वा
तेन संप्लुष्टपाशकम् ॥४७२॥
शिष्यं विधाय विश्रान्ति-
पर्यन्तं ध्यानयोगतः ।
ततः कुम्भेऽस्त्रकलशे
वह्नौ स्वात्मनि तं शिशुम् ४७३
प्रणामं कारयेत्पश्चा-
द्भूतमातृबलिं क्षिपेत् ।

आचार्य इति उपलक्षणम्, तेन साधकोऽपि । यद्वक्ष्यति

'प्राग्लिङ्गिनां मोक्षदीक्षा साधिकारविवर्जिता ।
साधकाचार्यतामार्गे न योग्यास्ते पुनर्भुवः ॥' (२२।२९)

इति । अत एव अनन्तरमेव उक्तं

'........दीक्षितः शिवशासने ।' (४६७)

इति । तेनेति शिवहस्तेन ॥

इदानीं शय्यां कल्पयितुमाह

ततः शंकरमभ्यर्च्य
शय्यामस्त्राभिमन्त्रिताम् ४७४
कृत्वास्यां शिष्यमारोप्य
न्यस्तमन्त्रं विधाय च ।
शिष्यहृच्चक्रविश्रान्तिं
कृत्वा तद्द्वादशान्तगः ॥४७५॥
भवेत्क्षीणकलाजालः
स्वरद्वादशकोदयात् ।
ततः प्रवेशप्रचित-
कलाषोडशकोज्ज्वलः ॥४७६॥
संपूर्णस्वात्मचिच्चन्द्रो
विश्राम्येद्धृदये शिशोः ।
स्वयं व्युत्थानपर्यन्तं
द्वादशान्तं ततो व्रजेत् ॥४७७॥
पुनर्विशेच्च हृच्चक्र-
मित्थं निद्राविधिक्रमः ।

स्वरद्वादशकं सूर्यकलारूपम । इत्थमिति

शिष्यात्मनोरेवं प्राणप्रवेशनिर्गमलक्षणेन उक्तेन प्रकारेणेत्यर्थः ॥

ननु एवं सति किं स्यादित्याशङ्क्य आह

आयातनिद्रः शिष्योऽसौ
निर्मलौ शशिभास्करौ ॥४७८॥
हृच्चक्रे प्रतिसंधत्ते
बलात्पूर्णकृशात्मकौ ।

ननु अतोऽपि किं स्यादित्याशङ्क्य आह

हठनिर्मलचन्द्रार्क-
प्रकाशः सत्यमीक्षते ॥४७९॥
स्वप्नं भाविशुभान्यत्व-
स्फुटीभावनकोविदम् ।

किमत्र प्रमाणमित्याशङ्क्य आह

उक्तं च पूर्णां च कृशां
ध्यात्वा द्वादशगोचरे ॥४८०॥
प्रविश्य हृदये ध्याये-
त्सुप्तः स्वाच्छन्द्यमाप्नुयात् ।

आयातनिद्रे च शिशौ
गुरुरभ्यर्च्य शङ्करम् ॥४८१॥
चरुं भुञ्जीत ससखा
ततोऽद्याद्दन्तधावनम् ।
स्वप्याच्च मन्त्ररश्मीद्ध-
हृच्चक्रार्पितमानसः ॥ ४८२ ॥
प्रातर्गुरुः कृताशेष-
नित्योऽभ्यर्चितशंकरः ।
शिष्यात्मनोः स्वप्नदृष्टा-
वर्थौ वित्ते बलाबलात् ॥४८३॥
स्वदृष्टं बलवन्नान्य-
त्संबोधोद्रेकयोगतः ।
बोधसाम्ये पुनः स्वप्न-
साम्यं स्याद्गुरुशिष्ययोः ४८४
देवाग्निगुरुतत्पूजा-
कारणोपस्करादिकम् ।

हृद्या स्त्री मद्यपानं चा-
प्याममांसस्य भक्षणम् ४८५
रक्तपानं शिरश्छेदो
रक्तविण्मूत्रलेपनम् ।
पर्वताश्वगजप्राय-
हृद्ययुग्याधिरोहणम् ॥४८६॥
यत्प्रीत्यै स्यादपि प्राय-
स्तत्तच्छुभमुदाहृतम् ।
तं ख्यापयेत्तुष्टिवृद्ध्यै
ह्लादो हि परमं फलम् ४८७॥
अतोऽन्यदशुभं तत्र
होमोऽष्टशतकोऽस्त्रतः ।
अशुभं नाशुभमिति
शिष्येभ्यो कथयेद्गुरुः ४८८
रूढां हि शङ्कां विच्छेत्तुं
यत्नः संघटते महान् ।

येषां तु शङ्काविलय-
स्तेषां स्वप्नवशोत्थितम् ४८९
शुभाशुभं न किंचित्स्यात्

उक्तमिति श्रीविज्ञानभैरवे । तत्र च पीनां च दुर्बलां चैवेति पाठः । चरुमिति प्रागात्मनः कृते परिस्थापितम् । वित्ते इति विचारयतीत्यर्थः । अनेन च स्वप्नस्य विचारणमुपक्रान्तम् । अन्यदिति शिष्यदृष्टम् । स्वप्नसाम्यमिति, नतु बलाबलत्वम् । प्राय इति नहि शिरश्छेदादेः प्रीतिकारित्वमस्तीति भावः । तमिति शुभं स्वप्नम् । अत इति उक्तात्स्वप्नात् । अन्यदिति विपरीतं पक्वमांसाशनादि । यदुक्तम्

'एतदेवान्यथाभूतं दुःस्वप्न इति कीर्त्यते ।
पक्वमांसाशनाभ्यंगगर्तादिपतनादिकम् ॥'

इति । अत्रत इति अत्रेण । अशुभाकथने द्वितीयार्धं हेतुः । तेषामिति विलीनशङ्कानाम्, नहि निर्विकल्पस्य शुभाशुभविभाग एव भवेदिति भावः ॥

त्रैगुण्यात्मकत्वाच्च एते स्वप्नेऽपि वैचित्र्यभाजो भवन्ति,–इत्याह

स्युश्चेत्थं चित्रतावशात्।

स्फुटं पश्यति सत्त्वात्मा

राजसो लिङ्गमात्रतः ॥४९०॥

न किंचित्तामसस्तस्य

सुखदुःखाच्छुभाशुभम्।

ननु इह तामसः किंचिदपि न पश्येत्, तत् कुतोऽस्य शुभाशुभनिश्चय इत्याशङ्क्य उक्तं तस्य सुखदुःखाच्छुभाशुभमिति ॥

ननु इह तामसस्य दीक्षाकर्मणि अधिकार एव कुतस्त्य इत्याशङ्कां प्रदर्श्य निराकरोति

नन्वत्र तामसो नाम

कथं योग्यो विधौ भवेत् ४९१

मैवं मा विग्रहं कश्चि-

त्क्वचित्कस्यापि वै गुणः।

वैशब्दोऽवधारणे, सच सर्वत्र संबन्धनीयः। गुण इति अर्थादुद्रिक्तः ॥

एतदेव दर्शयति

सर्वसात्त्विकचेष्टोऽपि
भोजने यदि तामसः ॥४९२॥
किं ततः सोऽधमः किंवा-
प्युत्कृष्टस्तद्विपर्ययः ।

तत इति भोजनमात्रे तामसत्वात् । तद्विपर्यय इति सर्वत्र तामसत्वे, भोजनमात्रे एव सात्त्विक इति ॥

एतदेव प्रकृते योजयति

आयातशक्तिपातोऽपि
दीक्षितोऽपि गुणस्थितेः ४९३
विचित्रात्मा भवेदेव
मुख्ये त्वर्थे समाहितः ।

गुणस्थितेरिति प्राकृतस्य देहस्य कंचित्कालमवस्थानात् । मुख्ये इति दीक्षालक्षणे ॥

इदानीं सामयं कर्म अभिधातुमाह

ततो गुरुः शिशोर्मन्त्र-
पूर्वकं देवतार्चनम् ॥ ४९४ ॥

देशयेत्स च तत्कुर्या-
त्संस्कुर्यात्तं ततो गुरुः ।
हृदादिचक्रषट्कस्था-
न्ब्रह्मादीन् षट् समाहितः ४९५
स्पृशेच्छिशोः प्राणवृत्त्या
प्रत्येकं चाष्ट संस्क्रियाः ।
हृदयादिद्विषट्कान्तं
बोधस्पर्शपवित्रितः ॥ ४९६ ॥

तत इति देवार्चनोपदेशाद्यनन्तरम् । तदेव आह हृदादीत्यादि, हृदादीनि चक्राणि हृदयकण्ठतालुभ्रूमध्यललाटब्रह्मरन्ध्रलक्षणानि षट् । प्रत्येकमिति एवं हि अष्टानां षड्गुणनादष्टचत्वारिंशत् संस्कारा भवन्तीत्यर्थः । बोधस्पर्शपवित्रित इति

'..................षट्त्यागात्सप्तमे लयः ।' (४।२६७)

इति दृष्ट्या द्वादशान्तावस्थितस्य परप्रमातृवपुषो बोधस्य स्पर्शेन, नतु साक्षात् तल्लयेन, पवित्रितस्तदनुविद्धायमानः कृत इत्यर्थः । यद्वक्ष्यति

'आपादितद्विजत्वस्य द्वादशान्ते निजैक्यतः ।
स्पर्शमात्रान्न विश्रान्त्या झटित्येवावरोहतः ॥
रुद्रांशापादनं येन समयी संस्कृतो भवेत् ।' (५२१)

इति ॥ ४९६ ॥

एतावतैवच अस्य संस्कारान्तरसिद्धिरित्याह

आहारबीजभावादि-
दोषध्वंसाद्भवेद्द्विजः ।
वसुवेदाख्यसंस्कार-
पूर्ण इत्थं द्विजः स्थितः ४९७

आदिशब्दात् देशः । यदुक्तं

'बीजाहारे तथा देशभावशुद्धौ द्विजो भवेत् ।' (स्व० ४।६८)

इति । तत्र आहारदोषः श्रुतिस्मृत्युक्तप्रक्रियया तदनिर्वाहात्, बीजदोषो

'ब्राह्मण्यं बीजशुद्ध्या स्यात्सा च स्त्रीषु व्यवस्थिता ।
तासां च चपलं चेतश्चण्डालेष्वपि धावति ॥'

इति दृष्ट्या वास्तव्याया बीजशुद्धेरसंभाव्यमानत्वात्, भावदोषोऽसत्यानार्जवादियोगात्, देशदोषो म्लेच्छादिसंपर्कात् । वसवोऽष्टौ वेदाश्चत्वारः, तेन अष्टचत्वारिंशता संस्कारैः संस्कृत इत्यर्थः ॥ ४९७ ॥

तानेव आह

गर्भाधानं पुंसवनं
सीमन्तो जातकर्म च ।
नाम निष्क्रामणं चान्न-
प्रशश्चूडा तथाष्टमी ॥४९८॥
व्रतबन्धैष्टिके मौञ्जी-
भौतिके सौमिकं क्रमात् ।
गोदानमिति वेदेन्दु-
संस्क्रिया ब्रह्मचर्यतः ॥४९९॥
प्रत्युद्वाहः पञ्चदशः
सप्त पाकमखास्त्वतः ।
अष्टकाः पार्वणी श्राद्धं
श्रावण्याग्रायणीद्वयम् ॥५००॥
चैत्री चाश्वयुजी पश्चात्
सप्तैव तु हविर्मखाः ।
आधेयमग्निहोत्रं च
पौर्णमासः सदर्शकः ॥५०१॥

चातुर्मास्यं पशूद्बन्धः
सौत्रामण्या सह त्वमी ।
अग्निष्टोमोऽतिपूर्वोऽथ
सोक्थ्यः षोडशिवाजपौ ॥५०२
आप्तोर्यामातिरात्रौ च
सप्तैताः सोमसंस्थिताः ।
हिरण्यपादादिमखः
सहस्रेण समावृतः ॥ ५०३ ॥
अष्टत्रिंशस्त्वश्वमेधो
गार्हस्थ्यमियता भवेत् ।
वानस्थ्यपारिव्राज्ये च
चत्वारिंशदमी मताः ॥५०४ ॥
दया क्षमानसूया च
शुद्धिः सत्कृतिमङ्गले ।
अकार्पण्यास्पृहे चात्म-
गुणाष्टकमिदं स्मृतम् ॥५०५॥

निष्क्रामणमादित्यदर्शनम् । व्रतबन्ध उपनयनम् । ऐष्टिकादि वेदपाठकालानुष्ठेयं व्रतचतुष्टयम् । वेदाध्ययनान्ते उपाध्यायाय गोमिथुनदानेन उपलक्षितमात्मनः केशादिवपनं गोदानम् । वेदाश्चत्वारः, इन्दुरेकः

'ततो भवति गोदानं तच्चतुर्दशकं प्रिये ।' (स्व० १०।३९६)

इति । अत इति उद्वाहानन्तरम् । श्राद्धं मृतपित्रादिविषयम् । आग्रायणीद्वयं शरद्वसन्तयोर्नवान्नयागरूपम् । अतिपूर्व इति अत्यग्निष्टोमः । आदिशब्दः प्रकारे, तेन हिरण्यपादो दशप्रकारश्चैत्ययज्ञ इत्यर्थः । सहस्रेणेति एकैकस्य शतसमावृतत्वात् । तदुक्तं

'हिरण्यपादः प्रथमस्तथा गुह्यहिरण्यधृत् ।
हिरण्यमेढ्रो हिरण्यनाभिर्हिरण्यगर्भ एवच ॥
हिरण्यश्रोत्रो हिरण्यत्वग्घिरण्याक्षस्तथैवच ।
हिरण्यजिह्वस्तच्छृङ्गो दश यज्ञाः प्रकीर्तिताः ॥
शतेन तु वृतं चात्र एकैकं तु विजानते ।' (स्व० १०।४०६)

इति । वानस्थ्यमिति वानप्रस्थ्यम् । दया परानुकम्पा । क्षान्तिरपकारिषु शक्तत्वेऽपि अप्रतिक्रिया । सत्कृतिरनायासमनुष्ठानाच्छोभनं करणम् ।

मङ्गलं प्रशस्तवस्त्वासेवनम् । आत्मेति आत्म-संनिकृष्टस्य अन्तःकरणवर्गस्य, नतु साक्षादेव आत्मनस्तस्य चिदेकरूपत्वात् ॥ ५०५ ॥

अत्रैव संस्कारान्तराणामपि अन्तर्भावं दर्शयति

मेखला दण्डमाजिन-
त्र्यायुषे वह्न्युपासनम् ।
संध्या भिक्षेति संस्काराः
सप्त सप्त व्रतानि च ॥५०६॥

भौतेशपाशुपत्ये द्वे
गाणेशं गाणपत्यकम् ।
उन्मत्तकासिधाराख्य-
घृतेशानि चतुर्दश ॥ ५०७ ॥

एते तु व्रतबन्धस्य
संस्कारा आङ्गिनः स्मृताः ।
पारिव्राज्यस्य गर्भे स्या-
दन्त्येष्टिरिति संस्कृतः ॥५०८॥

द्विजो भवेत्ततो योग्यो
रुद्रांशापादनाय सः ।
एतान्प्राणक्रमेणैव
संस्कारान्योजयेद्गुरुः ॥ ५०९ ॥
अथवाहुतियोगेन
तिलाद्यैर्मन्त्रपूर्वकैः ।

त्र्यायुषं भस्मपुण्ड्रकम् । व्रतबन्धस्य अङ्गिन इति । यदुक्तं

'नवमो व्रतबन्धस्तु स चाङ्गी परिकीर्तितः ।' (स्व० १०।३८८)

इति । एतानिति अष्टचत्वारिंशत् ॥

मन्त्रपूर्वकैरित्युक्तिं स्फुटयति

प्रणवो हृदयं नाम
शोधयाम्यग्निवल्लभा ॥ ५१० ॥
एवं क्रमेण मूर्धाद्यै-
रङ्गैरेतत्पुनः पुनः ।

हृदयमिति विद्याङ्गसंबन्धि । तेन प्रतिसंस्कारं विद्याङ्गपञ्चकेन आहुतिपञ्चकमेवमूहेन दातव्यमिति उक्तमेतत्पुनः पुनरिति ॥

ननु अयं द्विजत्वापत्त्या रुद्रांशापादनाय योग्यो भवेदिति कस्मादुक्तमित्याशङ्क्य आह

यतश्चिद्धर्म एवासौ
　　शान्त्याद्यात्मा द्विजन्मता ५११
तेन रुद्रतया संवि-
　　त्तत्क्रमेणैव जायते

येन असौ द्विजन्मता नाम

'शान्तो दान्तो जितक्रोध............।'

इत्यादिदृष्ट्या शान्त्याद्यात्मकत्वादुद्भवन्त्या-श्रितः समुपचितिरूप एव धर्मः । तेन यथाय-थमुपचितत्वेन हेतुना द्विजत्वापादनप्रथनमेव संवित् रुद्रतया जायते तदंशापादनयोग्योऽयं भवेदिति भावः ॥

एतदेव दृष्टान्तमुखेन हृदयङ्गमयति

यथा हेमादिधातूनां
　　पाके क्रमवशाद्भवेत् ॥ ५१२ ॥
रजतादि तथा संवि-
　　त्संस्कारे द्विजतान्तरे

यथाहि हेमाद्युत्पत्तिनिमित्तानां द्रव्यविशेषाणां पाके क्रियमाणे रजताद्यापत्तिक्रमेण तथाभावो भवेत्, तथैव संविदि संस्क्रियमाणायां द्विजतान्तरे तदासादनपुरःसरीकारेण रुद्रांशापत्तिर्भवेदित्यर्थः ॥

ननु अविप्लुतात् ब्राह्मणादविप्लुतायां ब्राह्मण्यां जातो द्विज इति उच्यते, तत् कथमेतदुक्तमित्याशङ्क्य आह

योनिर्न कारणं तत्र
शान्तात्मा द्विज उच्यते ॥५१३

ननु केन एवमुक्तमित्याशङ्क्य आह

मुनिना मोक्षधर्मादा-
वेतच्च प्रविवेचितम्

यदुक्तं तेन

'येन सर्वमिदं बुद्धं प्रकृतिर्विकृतिश्च या ।
गतिज्ञः सर्वभूतानां तं देवा ब्राह्मणं विदुः ॥
अभयं सर्वभूतेभ्यः सर्वेषामभयं यतः ।
सर्वभूतात्मभूतो यस्तं देवा ब्राह्मणं विदुः ॥'

इति ॥

'शूद्रोऽपि शीलसंपन्नो गुणवान्ब्राह्मणो भवेत् ।
पञ्चेन्द्रियार्णवं घोरं यदि शूद्रोऽपि तीर्णवान् ॥
तस्मै दानं प्रदातव्यमप्रमेयं युधिष्ठिर ।
न जातिर्दृश्यते राजन्गुणाः कल्याणकारकाः ॥'

इति ॥

नच एतदनेनैव उक्तमित्याह

मुकुटादिषु शास्त्रेषु
देवेनापि निरूपितम् ॥५१४॥

तदुक्तं तत्र

'शिवधर्मानुयायी च श्रद्दधानः शिवात्मकः ।
शिवे ज्ञाने गुरौ भक्तः प्रीतः सब्रह्मचारिषु ॥
अनसूयुर्दृष्टतत्त्वः संस्कृतश्च शिवाध्वरे ।
अन्त्यजातोऽपि हीनाङ्गः साधकः स च मोक्षभाक् ॥
एभिर्गुणैर्वियुक्तात्मा ब्राह्मणोऽपि न मोक्षभाक् ।
द्विजोऽपि मायी त्याज्यस्तु म्लेच्छो ग्राह्यो ह्यमायकः ॥
स प्रियस्तु महेशस्य चतुर्वेदो न दाम्भिकः ।
शिवद्वेषी पापकर्मा शिवधर्मादिदूषकः ॥
ब्राह्मणेन कृतं पापं शूद्रेण सुकृतं कृतम् ।
किं तत्र कारणं जातिर्धर्माधर्मेषु शस्यते ॥'

इत्यादि बहुप्रकारम् ॥ ५१४ ॥

ननु एतत् स्मृत्यादिशास्त्रान्तरविरोधात् कथं घटते इत्याशङ्क्य आह

संविदो देहसंभेदा-
त्सदृशात्सदृशोदयात् ।
भूमाभिप्रायतः स्मार्तैं
द्विजन्मा द्विजयोः सुतः ५१५

संविदो हि देहसंभेदमवलम्ब्य सदृशादविप्लुतात् सदृशस्य अविप्लुतस्यैव उदयात् हेतोः स्मृतिशास्त्रे बाहुल्याभिप्रायेण द्विजयोः सुतो द्विजन्मेति स्मृतः ॥ ५१५ ॥

ननु कुतोऽत्र भूम्ना एतदुक्तमित्याशङ्क्य आह

अन्त्यजातीयधीवादि-
जननीजन्मलाभतः ।
उत्कृष्टचित्ता ऋषयः
किं ब्राह्मण्येन भाजनम् ५१६

धीवेति धीवरी । ऋषय इति व्यासादयः ॥

अनेनैव आशयेन अस्मद्दर्शने न जात्यादिपरिग्रह इत्याह

अत एवार्थसत्तत्त्व-
देशिन्यस्मिन्न दिश्यते ।
रहस्यशास्त्रे जात्यादि-
समाचारो हि शाम्भवे ॥५१७॥

ननु यदि एवं, तत् स्मृत्यादावपि एवमेव कस्मात् न उक्तमित्याशङ्क्य आह

पाशवानि तु शास्त्राणि
वामशक्त्यात्मकान्यलम् ।
सृष्ट्यादिसिद्धये शंभोः
शङ्का तत्फलक्लृप्तये ॥५१८॥

सृष्ट्यादिर्लोकव्यवहारः । शङ्केति

'जातिशङ्का द्रव्यशङ्का ....................।'

इत्येवमादिना उक्ता । तत्फलं स्वर्निरयादि ॥

एवमेतत् प्रसङ्गादभिधाय प्रकृतमेव आह

आपादितद्विजत्वस्य
द्वादशान्ते निजैक्यतः ।
स्पर्शमात्रान्न विश्रान्त्या
झटित्येवावरोहतः ॥ ५१९ ॥

रुद्रांशापादनं येन
समयी संस्कृतो भवेत् ।

न विश्रान्त्येति एवंहि परमशिवे एव योजना कृता भवेदिति भावः ॥

ननु एवंसंस्कृतत्वे अस्य किं स्यादित्याशङ्क्य आह

अधीतौ श्रवणे नित्यं
पूजायां गुरुसेवने ॥ ५२० ॥
समय्यधिकृतोऽन्यत्र
गुरुणा विभुमर्चयेत् ।

अन्यत्रेति नैमित्तिकादौ । यथोक्तं

'नित्यादित्रितयं कुर्याद्गुरुः साधक एवच ।
नित्यमेवं द्वयं चान्यद्यावज्जीवं शिवाज्ञया ॥'

इति ॥

ननु अस्य किं श्रोतव्यमध्येतव्यं वा,—इत्याशङ्कां गर्भीकृत्य समयान् वक्तुमुपक्रमते

तमापादितरुद्रांशं
समयान् श्रावयेद्गुरुः ॥५२१॥

अष्टाष्टकात्मकान्देव्या-
यामलादौ निरूपितान् ।
अवादोऽकरणं गूढिः
पूजा तर्पणभावने ॥५२२॥
हननं मोहनं चेति
समयाष्टकमष्टधा ।
स्वभावं मन्त्रतन्त्राणां
समयाचारमेलकम् ॥५२३॥
असत्प्रलापं परुष-
मनृतं नाष्टधा वदेत् ।
अफलं चेष्टितं हिंसां
परदाराभिमर्शनम् ॥५२४॥
गर्वं दम्भं भूतविष-
व्याधितन्त्रं नचाचरेत् ।
स्वं मन्त्रमक्षसूत्रं च
विद्यां ज्ञानस्वरूपकम् ५२५

समाचारान्गुणान्क्लेशा-
न्सिद्धिलिङ्गानि गूहयेत् ।
गुरुं शास्त्रं देववह्नी
ज्ञानवृद्धांस्त्रियो व्रतम् ५२६

गुरुवर्गं यथाशक्त्या
पूजयेदष्टकं त्विदम् ।
दीनान्क्लिष्टान्पितॄन्क्षेत्र-
पालान्प्राणिगणान् खगान् ॥

श्माशानिकं भूतगणं
देहदेवीश्च तर्पयेत् ।
शिवं शक्तिं तथात्मानं
मुद्रां मन्त्रस्वरूपकम् ॥५२८॥

संसारभुक्तिमुक्तीश्च
गुरुवक्त्रात्तु भावयेत् ।
रागं द्वेषमसूयां च
संकोचेर्ष्याभिमानिताः ५२९

समयप्रतिभेत्तॄंस्त-
दनाचारांश्च घातयेत् ।
पशुमार्गस्थितान्क्रूरा-
न्द्वेषिणः पिशुनाञ्जडान् ५३०

राज्ञश्चानुचरान्पापा-
न्विघ्नकर्तॄंश्च मोहयेत् ।
शाकिन्यः पूजनीयाश्च
ताश्चेत्थं श्रीगमोदिताः ५३१

साहसं द्विगुणं यासां
कामश्चैव चतुर्गुणः ।
लोभश्चाष्टगुणस्तासां
शङ्क्यं शाकिन्य इत्यलम् ५३२

कुलाम्नायस्थिता वीर-
द्रव्यबाह्यास्तु ये न तैः ।
पशुभिः सह वस्तव्य-
मिति श्रीमाधवे कुले ॥५३३॥

देवताचक्रगुर्वग्नि-
शास्त्रं साम्यात्सदार्चयेत् ।
अनिवेदितमेतेभ्यो
न किंचिदपि भक्षयेत् ५३४
एतद्द्रव्यं नापहरे-
द्गुरुवर्गं प्रपूजयेत् ।
स च तद्भ्रातृभार्यातु-
क्प्रायो विद्याकृतो भवेत् ५३५
न योनिसंबन्धकृतो
लौकिकः स पशुर्यतः ।
तस्याभिष्वङ्गभूमिस्तु
गुर्वाराधनसिद्धये ॥५३६॥
अर्च्यो न स्वमाहिम्ना तु
तद्वर्गो गुरुवत्पुनः ।
गुरोर्निन्दां न कुर्वीत
तस्यै हेतुं नचाचरेत् ५३७

नच तां शृणुयान्नैनं
कोपयेन्नाग्रतोऽस्य च ।
विनाज्ञया प्रकुर्वीत
किंचित्तत्सेवनादृते ॥५३८॥
लौकिकालौकिकं कृत्यं
क्रोधं क्रीडां तपो जपम् ।
गुरूपभुक्तं यत्किंचि-
च्छय्यावस्त्रासनादिकम् ॥५३९
नोपभुञ्जीत तत्पत्नीं
न स्पृशेत्किंतु वन्दयेत् ।

तत्रत्यमेव एषामष्टाष्टकात्मकत्वं दर्शयति अवाद् इत्यादिना । समयस्तत्तद्रहस्ययागरूपः, आचारस्तत्समुचिता क्रिया । नाचरेदिति न कुर्यादित्यर्थः । विद्यां पाण्डित्यादिरूपां स्वोत्कर्ष-परतया । ज्ञानस्वरूपं तत्त्वपरिज्ञानम् । व्रतं स्वकं मुद्रादि । प्राणिगणा गवादयः । न किंचिदिद-मिति संसारस्य भावनम् । प्रज्वलनात्मको द्वेषः । गुणेषु दोषारोपणमसूया । परोत्कर्षासहनमीर्ष्या ।

द्विगुणमिति ग्रन्थान्तराभिप्रायेण। सचेति गुरुवर्गः। तुगिति तनयः। यत् निघण्टुः 'तुक् तोकं तनयः' (२।२) इति। स इति योनिसंबन्धकृतः। तद्-भिष्वङ्गभूमित्वमचने हेतुः। तस्यै गुरुनिन्दायै। तामिति गुरुनिन्दाम्। एनमिति गुरुम्, तत्सेवनं हि विनैव तदाज्ञां भवेदिति भावः ॥

ननु कस्मादेवं गुर्वाराधने भर इत्याशङ्क्य आह

श्रीमत्त्रैशिरसेऽप्युक्तं
कृच्छ्रचान्द्रायणादिभिः ॥५४०

अरण्ये काष्ठवत्तिष्ठे-
दसिधाराव्रतोऽपि सन्।

नियमस्थो यमस्थोऽपि
तत्पदं नाश्नुते परम् ॥५४१॥

गुर्वाराधनसक्तस्तु
मनसा कर्मणा गिरा।

प्राप्नोति गुरुतस्तुष्टात्
पूर्णं श्रेयो महाद्भुतम् ५४२

हिमपातैर्यथा भूमि-
श्छादिता सा समन्ततः ।
मारुतश्लेषसंयोगा-
दश्मवत्तिष्ठते सदा ॥५४३॥
यमादौ निश्चले तद्व-
द्भाव एकस्तु गृह्यते ।
गुरोस्त्वाराधितात्पूर्णं
प्रसरज्ज्ञानमाप्यते ॥५४४॥
सर्वतोऽवस्थितं चित्त्वं
ज्ञेयस्थं यस्य तत्कथा ।
सद्य एव नयेदूर्ध्वं
तस्मादाराधयेद्गुरुम् ॥ ५४५ ॥
श्रीसारेऽप्यस्य संभाषा-
त्पातकं नश्यति क्षणात् ।
तस्मात्परीक्ष्य यत्नेन
शास्त्रोक्त्या ज्ञानलक्षणैः ५४६

शास्त्राचारेण वर्तेत
तेन सङ्गं तथा कुरु ।
स्नेहाज्ज्ञातु वदेज्ज्ञानं
लोभान्न ह्रियते हि सः ५४७
तेन तुष्टेन तृप्यन्ति
देवाः पितर एवच ।
उत्तीर्य नरकाद्यान्ति
सद्यः शिवपुरं महत् ॥५४८॥
भुंक्ते तिष्ठेद्यत्र गृहे
व्रजेच्छिवपुरं तु सः ।
इति ज्ञात्वा सदा पित्र्ये
श्राद्धे स्वं गुरुमर्चयेत् ॥५४९॥
भुञ्जीत स स्वयं चान्या-
नादिशेत्तत्कृते गुरुः ।
यो दीक्षितस्तु श्राद्धादौ
स्वतन्त्रं विधिमाचरेत् ५५०

तस्य तन्निष्फलं सर्वं
समयेन च लङ्घ्यते ।
सैद्धान्तिकार्पितं चण्डी-
योग्यं द्रव्यं विवर्जयेत् ५५१

शाकिनीवाचकं शब्दं
न कदाचित्समुच्चरेत् ।
स्त्रियः पूज्या विरूपास्तु
वृद्धाः शिल्पोपजीविकाः ५५२

अन्त्या विकारिताङ्ग्यश्च
वेश्याः स्वच्छन्दचेष्टिताः ।
तथाच श्रीगमे प्रोक्तं
पूजनीयाः प्रयत्नतः ॥५५३॥

निराचाराः सर्वभक्ष्या
धर्माधर्मविवर्जिताः ।
स्वच्छन्दगाः पलाशिन्यो
लम्पटा देवता इव ॥ ५५४ ॥

वश्याः पूज्यास्तद्गृहं च
प्रयागोऽत्र यजेत्क्रमम् ।
स्त्रीषु तन्नाचरेत्किंचि-
द्येन ताभ्यो जुगुप्सते ॥५५५॥
अतो न नग्नास्ताः पश्ये-
न्नचापि प्रकटस्तनीः ।
वृद्धायाः संस्थितायाया वा
न जुगुप्सेत मुद्रिकाम् ५५६
वैकृत्यं तत्र सौरूप्यं
मेलकं न प्रकाशयेत् ।
देवमूर्तिं शून्यतनुं
पूजयेत्त्रिपथादिषु ॥ ५५७ ॥
सर्वपर्वसु सामान्य-
विशेषेषु विशेषतः ।
पूजा गुरोरनध्यायो
मेलके लोभवर्जनम् ॥५५८॥

न जुगुप्सेत मद्यादि
वीरद्रव्यं कदाचन ।
न निन्देदथ वन्देत
नित्यं तज्जोषिणस्तथा ॥५५९॥

उपदेशाय न दोषा
हृदयं चेन्न विद्विषेत् ।
विजातीयविकल्पांशो-
त्पुंसनाय यतेत च ॥ ५६० ॥

गुरोः शास्त्रस्य देवीनां
नाम मन्त्रे यतस्ततः ।
अर्चातोऽन्यत्र नोच्चार्य-
माहूतं तर्पयेत्ततः ॥ ५६१ ॥

आगतस्य च मन्त्रस्य
न कुर्यात्तर्पणं यदि ।
हरत्यर्धशरीरं त-
दित्यूचे भगवान्यतः ॥५६२॥

श्रीमदूर्मौ च देवीनां
वीराणां चेष्टितं न वै ।
प्रथयेन्न जुगुप्सेत
वदेन्नाद्रव्यपाणिकः ॥ ५६३ ॥
श्रीपूर्वं नाम वक्तव्यं
गुरोर्द्रव्यकरेण च ।
गुर्वादीनां न लङ्घ्या च
छाया न तैर्थिकैः सह ५६४
जल्पं कुर्वन्स्वशास्त्रार्थं
वदेन्नापिच सूचयेत् ।
नित्याद्विशेषपूजां च
कुर्यान्नैमित्तिके विधौ ॥५६५॥
ततोऽपि मध्ये वर्षस्य
ततोऽपि हि पवित्रके ।
अन्यस्तमन्त्रो नासीत
सेव्यं शास्त्रान्तरं च नो ५६६

अप्ररूढं हि विज्ञानं
　　कम्पेतेतरभावनात् ।
गृहोपस्करणास्त्राणि
　　देवतायागयोगतः ॥ ५६७ ॥

अर्च्यानीति न पद्भ्यां वै
　　स्पृशेन्नापि विलङ्घयेत् ।
गुरुवर्गे गृहायाते
　　विशेषं कंचिदाचरेत् ॥५६८॥

दीक्षितानां न निन्दादि
　　कुर्याद्विद्वेषपूर्वकम् ।
उपदेशाय नो दोषः
　　स ह्यविद्वेषपूर्वकः ॥ ५६९ ॥

न वैष्णवादिकाधःस्थ-
　　दृष्टिभिः संवसेदलम् ।
सहभोजनशय्याद्य-
　　नैषां प्रकटयेत्स्थितिम् ५७०

उक्तं श्रीमाधवकुले
शासनान्तरसंस्थितान् ।
वेदोक्तिं वैष्णवोक्तिं च
तैरुक्तं वर्जयेत्सदा ॥५७१॥

भाव एक इति तत्रैव सावधानत्वात् निश्चल इत्यर्थः । ज्ञानस्य प्रसरद्रूपत्वे हेतुस्तस्य सर्वतोऽवस्थितं चित्त्वं ज्ञेयस्थमिति । न केवलं तदुपदेशादेवं भवेत्, यावत् तत्संभाषणमात्रादपीत्याह तत्कथेति । संस्थिताया मृतायाः। तत्रेति मुद्रिकायाम् । तज्जोषिणो वीरद्रव्यरतान् । उपदेशायेति 'क मद्यं क शिवे भक्तिः' इत्यादेः । अत्र हि उपदेश्याशयसंतोषणमात्रं फलम् । वर्षमध्ये इति यदाकदाचन सामग्री भवेदिति भावः। शास्त्रान्तरमिति स्वशास्त्रविरुद्धम् । गृहोपस्करणानि चुल्ल्यादीनि । तैरिति वेदादिस्थितैः ॥

अत्र हेतुः

अकुलीनेषु संपर्का-
त्कुलात्पतनाद्भयम् ।

एकपात्रे कुलाम्नाये
तस्मात्तान्परिवर्जयेत् ॥५७२॥
प्रमादाच्च कृते सख्ये
गोष्ठ्यां चक्रं तु पूजयेत् ।
श्रीमदूर्मौ च कथित-
मागमान्तरसेवके ॥५७३॥
गुर्वन्तररते मूढे
देवद्रव्योपजीवके ।
शक्तिहिंसाकरे दुष्टे
संपर्कं नैव कारयेत् ॥५७४॥
न विकल्पेन दीक्षादौ
व्रजेदायतनादिकम् ।
उक्तास्थाशिथिलत्वे य-
न्निमित्तं नैव तच्चरेत् ॥५७५॥
शासनस्थान्पुराजात्या
न पश्येन्नाप्युदीरयेत ।

नच व्यवहरेत्सर्वा-
ञ्छिवाभेदेन केवलम् ॥५७६॥
सद्विद्यैः साकमासीत
ज्ञानदीप्त्यै यतेत च ।
नासंस्कृतां व्रजेत्तज्ज्ञं
विफलत्वं नचानयेत् ॥५७७॥
मेलकार्धनिशाचर्या
जनवर्जं च तन्नहि ।
मांसादिदाहगन्धं च
जिघ्रेद्देवीप्रियो ह्यसौ ॥५७८॥
गुर्वाज्ञां पालयन्सर्वं
त्यजेन्मन्त्रमयो भवेत् ।
शास्त्रपूजाजपध्यान-
विवेकतदुपाक्रियाः ॥५७९॥
अकुर्वन्निष्फलां नैव
चेष्टेत त्रिविधां क्रियाम् ।

मन्त्रतन्त्रैर्न वादं च
कुर्यान्नो भक्षयेद्विषम् ॥५८०॥
समयानां विलोपे च
गुरुं पृच्छेदसन्निधौ ।
तद्वर्गं निजसन्तान-
मन्यं तस्याप्यसंनिधौ ॥५८१॥
तेनोक्तमनुतिष्ठेच्च
निर्विकल्पं प्रयत्नतः ।
यतः शास्त्रादिसंबोध-
तन्मयीकृतमानसः ॥५८२॥
शिव एव गुरुर्नास्य
वागसत्या विनिःसरेत् ।
शिवस्य स्वात्मसंस्कृत्यै
प्रह्वीभावो गुरोः पुनः ॥५८३॥
ह्लादायेत्युभयार्थाय
तत्तुष्टिः फलदा शिशोः ।

गुर्वायत्तैकसिद्धिर्हि
समय्यपि विबोधभाक् ५८४
तद्बोधबहुमानेन
विद्याद्गुरुतमं गुरुम् ।
अतः संप्राप्य विज्ञानं
यो गुरौ बाह्यमानवान् ५८५
नासौ विज्ञानविश्वस्तो
नासत्यं भ्रष्ट एव सः ।
ज्ञानानाश्वस्तचित्तं तं
वचोमात्रेण शास्त्रितम् ॥५८६॥
भक्तं च नार्चयेज्जातु
हृदा विज्ञानदूषकम् ।
तादृक् च न गुरुः कार्य-
स्तं कृत्वापि परित्यजेत् ५८७
मुख्यबुद्ध्या न संपश्ये-
द्वैष्णवादिगतान्गुरून् ।

तथाच श्रीमदूर्म्याख्ये
　गुरोरुक्तं विशेषणम् ॥५८८॥
गुर्वाज्ञा प्राणसंदेहे
　नोपेक्ष्या नो विकल्प्यते ।
कौलदीक्षा कौलशास्त्रं
　तत्त्वज्ञानं प्रकाशितम् ५८९
येनासौ गुरुरित्युक्तो
　ह्यन्ये वै नामधारिणः ।
श्रीमदानन्दशास्त्रे च
　तथैवोक्तं विशेषणम् ॥५९०॥
यस्माद्दीक्षा मन्त्रशास्त्रं
　तत्त्वज्ञानं स वै गुरुः ।
तिष्ठेदव्यक्तलिङ्गश्च
　न लिङ्गं धारयेत् क्वचित् ५९१
न लिङ्गिभिः समं कैश्चि-
　त्कुर्यादाचारमेलनम् ।

केवलं लिङ्गिनः पाल्या
न बीभत्स्या विरूपकाः ५९२

श्रीमद्रात्रिकुले चोक्तं
मोक्षः शङ्कापहानितः।
अशुद्धवासस्नयैषा
मोक्षवार्तापि दुर्लभा ॥५९३॥

न लिखेन्मन्त्रहृदयं
श्रीमन्मालोदितं किल।
तदङ्गादुद्धरेन्मन्त्रं
नतु लेखे विलेखयेत् ॥५९४॥

अतत्त्वेऽभिनिवेशं च
न कुर्यात्पक्षपाततः।
जातिविद्याकुलाचार-
देहदेशगुणार्थजान् ॥५९५॥

ग्रहान्ग्रहानिवाष्टौ द्रा-
क्त्यजेद्गह्वरशंसितान्।

तथा श्रीनिशिचारादौ
　　हेयत्वेनोपदर्शितान् ॥५९६॥
ब्राह्मणोऽहं मया वेद-
　　शास्त्रोक्तादपरं कथम् ।
अनुष्ठेयमयं जाति-
　　ग्रहः परनिरोधकः ॥५९७॥
एवमन्येऽप्युदाहार्याः
　　कुलगह्वरवर्त्मना ।

तानिति वेदादिस्थितान्। विकल्पेनेति संशयेन, असंदिग्धचित्तस्तु वक्ष्यमाणनीत्या व्रजेदेवेति आशयः । पुराजातिर्ब्राह्मणादिलक्षणा । शिवाभेदेन पश्येदित्यादिः संबन्धः । यथोक्तं

'प्राग्जात्युदीरणाद्देवि प्रायश्चित्ती भवेन्नरः ।
दिनत्रयं तु रुद्रस्य पञ्चाहं केशवस्य च ॥
पितामहस्य पक्षैकं नरके पच्यते तु सः ॥' (स्व० ४।५४५)

इति,

'ब्राह्मणाः क्षत्रिया वैश्याः शूद्रा वै वीरवन्दिते ।
आचार्यत्वे नियुक्ता ये सर्वे ते तु शिवाः स्मृताः॥' (स्व० ४।४१४)

इति च । असंस्कृतामकृतदीक्षां व्रजेत् संग-

च्छेत । तज्जमिति कुण्डगोलकादि । सर्वं त्यजे-
दिति यथा तदाज्ञा पालिता भवेदिति भावः ।
पृच्छेदिति प्रायश्चित्तम् । अन्यमिति गुर्वन्तरम् ।
तस्येति निजसन्तानस्य । तेनेति अन्येन । शिवस्य
हि नमस्कारे न शिवे कश्चित् विशेषः, अपितु
नमस्कर्तुरात्मनि; गुरौ पुनस्तथाभावे स्वात्म-
संस्कारेऽपि तदाह्लादो भवेदेवेति उक्तमुभयार्था-
येति । कृत्वापीति प्रमादात् । नो विकल्प्यते
इति किं कार्या न वेति ॥

ननु जात्यादौ ग्रहतया निरूपणं कस्मात्
कृतमित्याशङ्क्य आह

अतत्स्वभावे ताद्रूप्यं
दर्शयन्नवशोऽपि यः ॥५९८॥
स्वरूपाच्छादकः सोऽत्र
ग्रहो ग्रह इवोदितः ।

एतदेव प्रपञ्चयति

संवित्स्वभावे नो जाति-
प्रभृतिः कापि कल्पना ॥५९९॥

रूपं सा त्वस्वरूपेण
　　तद्रूपं छादयत्यलम् ।
या काचित्कल्पना संवि-
　　त्तत्त्वस्याखण्डितात्मनः ६००

संकोचकारिणी सर्वः
　　स ग्रहस्तां परित्यजेत् ।
श्रीमदानन्दशास्त्रे च
　　कथितं परमेष्ठिना ॥६०१॥

निरपेक्षः प्रभुर्वामो
　　न शुद्ध्या तत्र कारणम् ।
देवीतृप्तिर्मखे रक्त-
　　मांसैर्नो शौचयोजनात् ६०२

द्विजान्त्यजैः समं कार्या
　　चर्चान्तेऽपि मरीचयः ।
अविकारकृतस्तेन
　　विकल्पान्निरयो भवेत् ६०३

सर्वदेवमयः कायः
सर्वप्राणिष्विति स्फुटम् ।
श्रीमद्भिर्नकुलेशाद्यै-
रप्येतत्सुनिरूपितम् ॥६०४॥

शरीरमेवायतनं
नान्यदायतनं व्रजेत् ।
तीर्थमेकं स्मरेन्मन्त्र-
मन्यतीर्थानि वर्जयेत् ॥६०५॥

विधिमेनं सुखं ज्ञात्वा
विधिजालं परित्यजेत् ।
समाधिर्निश्चयं मुक्त्वा
न चान्येनोपलभ्यते ॥६०६॥

इति मत्वा विधानज्ञः
संमोहं परिवर्जयेत् ।
मन्त्रस्य हृदयं मुक्त्वा
न चान्यत्परमं क्वचित् ॥६०७

इति मत्वा विधानज्ञो
　　मन्त्रजालं परित्यजेत् ।
नैवेद्यं प्राशयेन्नद्या-
　　स्तच्छेषं च जले क्षिपेत् ६०८
तैर्भुक्ते न भवेद्दोषो
　　जलजैः पूर्वदीक्षितैः ।

ननु अत्र समयशब्दस्य प्रवृत्तौ किं निमित्त-मित्याशङ्क्य आह

अवश्यपालनीयत्वा-
　　त्परतत्त्वेन संगमात् ॥६०९॥
ज्ञानप्राप्त्यभ्युपायत्वा-
　　त्समयास्ते प्रकीर्तिताः ।
एवं संश्राव्य समया-
　　न्देवं संपूज्य दैशिकः ॥६१०॥
विसर्जयेत्स्वचिद्व्योम्नि
　　शान्ते मूर्तिविलापनात् ।

यदि पुत्रकदीक्षास्य
न कार्या समनन्तरम् ॥६११॥

तदाभिषिञ्चेत्साश्त्रेण
शिवकुम्भेन तं शिशुम् ।

आत्मानं च ततो यस्मा-
ज्जलमूर्तिर्महेश्वरः ॥ ६१२ ॥

मन्त्रयुङ्खिलाप्यायी
कार्यं तदभिषेचनम् ।

अस्य च अवश्यपरिपालनीयतारूपता रूढ्या । समयन्ति संगच्छन्ते परं तत्त्वमनेनेति, सम्यगयनं ज्ञानमस्मादिति च व्युत्पत्त्या समयशब्दः प्रवृत्त इत्यर्थः । न कार्येति कार्यायां पुनरभिषेको न भवेदिति भावः ॥

आह्निकार्थमेव प्रथमार्धेन उपसंहरति

इति समयदीक्षणमिदं
प्रकाशितं विस्तराच्च संक्षेपात् ।

विस्तरादिति अर्थात् । संक्षेपादिति ग्रन्थत इति शिवम् ॥

नित्यनिमित्तादिबहुप्रकारकर्मप्रपञ्चपञ्चमुखः ।
पञ्चदशकमाह्निकमिदं व्यपञ्चयज्जयरथाभिख्यः ॥

---

इति श्रीतन्त्रालोकविवेके समयदीक्षाप्रकाशनं
नाम पञ्चदशमाह्निकम् ॥ १५ ॥

